# ईशावास्योपनिषद् ।

स्वामी प्रेमपुरी
योगिराजशिष्यो मैत्रेयश्च



# ईशावास्योपनिषद् ।

## आग्नेयभाष्यसहिता,

## विवरणोपेता च ।



द्वितीयसंस्करणम् ।

विक्रमाब्दाः १९८३, खिस्ताब्दाः १९२६.




भाष्यविवरणयोः संग्राहकः—

स्वामी प्रेमपुरी

योगिराजशिष्यो मैत्रेयश्च ।





संशोधकः

स्वामी ज्योतिर्मयानन्दपुरी ।



## समर्पणम् ।

इदं नम ऋषिभ्यः पूर्व-
जेभ्यः पूर्वेभ्यः पथि-
कृद्भ्यः ।

( ऋग्वेदसंहिता १०-१४-१५;
अथर्ववेदसंहिता १८—२—२;
तैत्तिरीयारण्यक ६—५—१. )

# आवेदनम् ।



ग्रन्थोऽसौ प्रथममाङ्ग्लाण्डदेशे "लंदम्" (लण्डन) नगरे एतस्याम्—W. Thacker & Co., 2, Creed Lane, E. C.—संस्थायां मुद्रितः। अमुष्य पुनर्मुद्रणञ्च बहुभिर्महात्मभिरादिष्टम्। तत्तु श्रेष्ठिनो

लक्ष्मीदासस्य धर्म्मपत्नी

जव्हेरबाई श्रुतवती। तया हि स्वस्याः पत्युः स्मरणार्थं, विना मूल्यं वितरणाय, मुद्रापयित्वा प्रकाशितोऽयम्–इति सहृदयान् सूरीन् आवेदयतो मुदमेति मे मानसम्।

—स्वामी मङ्गलगिरिः,

(व्यवस्थापक–परिव्राजक महामण्डल,काशी.)



# प्रथमसंस्करणस्य विज्ञापनम् ।



पूर्वं ग्रन्थोऽयं लिखितावस्थायां मयाऽवलोकितः, संस्कारपुरःसरमस्य प्रकाशनञ्चानुमोदितमासीत् । साम्प्रतं

ब्राह्मणमण्डलेन श्रीमन्महाराज-
काशीनरेशेन

चानुमोद्य सुधीनां विचारार्थं प्रकाशित इति हृष्टोऽहं विज्ञापयामि धर्मजिज्ञासुभिः सर्वैरपि विशेषतो वारमेकं द्रष्टव्य इति ।

—योगिराजः ( बुद्धगयाधीश्वरः )



# प्रथमसंस्करणस्य निवेदनम् ।



भाष्यमिदं बहून् ग्रन्थानवलोक्य दीर्घकालं प्रभूतायासेन संगृहीतम्—इत्यस्य दोषवर्ज्जनपुरःसरं गुणग्रहणाय सविनयं प्रार्थ्यन्ते सहृदया विद्वांसः ।

शुक्लयजुर्वेदस्य द्वे शाखे उपलभ्येते, काण्वशाखा माध्यन्दिनशाखा चेति । इयमुपनिषत्तूभयत्र दृश्यते । तत्र शाखाभेदेन पाठभेदोऽप्यस्ति । भाष्यञ्चेदं काण्वशाखीयपाठमवलम्ब्य संगृहीतम् । इति शम् ।

भाष्यसंग्रहकर्ता

स्वामी प्रेमपुरी

योगिराजशिष्यो मैत्रेयश्च ।



# निर्घण्टः ।









सद्गत श्रीमान् शेठ लक्ष्मीदास भीमजी, मुम्बई.

## अथ शुक्लयजुर्वेदे काण्वशाखानुसारम्—

# उपनिषत्-पाठः ।



ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥
कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥
असुर्य्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥
अनेजदेकं मनसोजवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥
तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥
यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥
स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धम-
पापविद्धम् ।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥
अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥ ९ ॥
अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥
विद्याञ्चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥११॥
अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥ १२ ॥
अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

सम्भूतिञ्च विनाशं च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्त्वा सम्भूत्याऽमृतमश्नुते ॥१४॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसा-
वसौ पुरुषः सोऽहमस्मि ॥ १६ ॥
वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ॐ क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर॥१७॥
अग्ने नयसुपथा राये अस्मान् विश्वानि देव
वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं
विधेम ॥ १८ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः

इत्युपनिषत् ।

---

# तत्र माध्यन्दिनशाखानुसारम्-पाठान्तराणि ।

ॐ पूर्णमित्यादिशान्तिः ।

ईशावास्यमित्यादि ॥ १ ॥

कुर्व्वन्नेवेत्यादि ॥ २ ॥

असूर्य्यानामेत्यादि ॥ ३ ॥

अनेजदेकमित्यादि ॥ ४ ॥

तदेजति तन्नैजतीत्यादि ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥ ६ ॥

यस्मिन् सर्वाणीत्यादि ॥ ७ ॥

स पर्यगाच्छुक्रमित्यादि ॥ ८ ॥

अन्धं तमः प्रविशन्ति येऽसंभूतिमित्यादि ॥ ९ ॥

अन्यदेवाहुः संभवादित्यादि ॥ १० ॥

सम्भूतिञ्च विनाशञ्चेत्यादि ॥ ११ ॥

अन्धं तमः प्रविशन्ति येऽविद्यामित्यादि ॥ १२ ॥

अन्यदेवाहुर्विद्ययेत्यादि ॥ १३ ॥

विद्याञ्चाविद्याञ्चेत्यादि ॥ १४ ॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ॐ क्रतो स्मर क्लिबे स्मर कृतं स्मर ॥ १५ ॥

अग्ने नय सुपथेत्यादि ॥ १६ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ॥ १७ ॥

ॐ खं ब्रह्म ॥ १८ ॥

ॐ पूर्णमित्यादिशान्तिः ।

इति ।

---

# अथ मन्त्राणां परस्परं सम्बन्धप्रदर्शनम् ।

## ( काण्वशाखापाठे )

प्रस्थानत्रयात्मिकेयमुपनिषत् । तत्रादौ शान्तिपाठः ।

अथ प्रथमं प्रस्थानम्–इहलोके जीवन्मुक्तिलाभात्मकम् । तत्र भक्तेर्मुख्यत्वम्, कर्म्मज्ञानयोर्गौणत्वम् ।

—ईश्वरेच्छादर्शनेन त्यागः ॥ १ ॥
—तत्र त्यागो वासनात्यागो न कर्म्मत्यागः ॥ २ ॥
—तत्र च कर्मत्यागे आत्मघातप्रवृत्तिः, आत्मघातिनामसुरलोकप्राप्तिश्च ॥ ३ ॥
—तत्र प्रथममात्मनोऽविनाशित्वप्रतिपादनम् ॥ ४ ॥
—ततस्तस्य लोकान्तरप्राप्तिप्रतिपादनम् ॥ ५ ॥
—किञ्च सम्यगात्मतत्त्वबोधेन जुगुप्साशोकमोहादेर्निवृत्तिः; ततश्च आत्मघातप्रवृत्तेर्मूलकारणानामेव समुच्छेदः ॥ ६, ७ ॥
—ततश्च जीवन्मुक्तिलाभः ॥ ८ ॥

अथ द्वितीयं प्रस्थानम्–इह लोके स्थित्वा परलोकवेदनात्मकम् । तत्र ज्ञानस्य मुख्यत्वम्, भक्तिकर्म्मणोर्गौणत्वम् ।

—अमृतत्वप्राप्तिः सा तु कर्मसहचरितज्ञानेन ॥ ९, १०, ११ ॥
—तत्र ज्ञानं नित्यानित्यविचारः ॥ १२, १३, १४ ॥
—तत्र नित्यानित्यनिरूपणं सूर्यदृष्टान्तेन ॥ १५, १६ ॥

अथ तृतीयं प्रस्थानम्–परलोके सुफललाभात्मकम् । तत्र कर्मणो मुख्यत्वम्, भक्तिज्ञानयोर्गौणत्वम् ॥

—सामान्यतो लोकान्तरे कर्मफलप्राप्तिः ॥ १७ ॥
—तत्र विशेषतः सुफलप्राप्त्यर्थमुपासनाकर्मनिरूपणम् ॥१८॥

अथान्ते शान्तिपाठः ।

इति ।

---

# शुद्धिपत्रम् ।

| पृष्ठे, | पङ्क्तौ, | अशुद्धम्, | शुद्धम् । |
|---|---|---|---|
| १ | ९ | निषादिति | निषीदति· |
| ४ | १७ | स्वस्य गते, | स्वस्य[1] ( स्वस्याः ) गतेः |
| ४ | १८ | शक्तिमेवः | शक्तिमेव, |
| ५ | ३ | यक्किञ्च | यत्किञ्च |
| १५ | ९ | ज्ञोन | ज्ञाने |
| १६ | १७ | त्त्वम् | त्वम् |
| १९ | १२ | तत्व | तत्त्व |
| १९ | १५ | आत्मतत्वम् | आत्मतत्त्वम् |
| २० | ८ | वात्मतत्व | वात्मतत्त्व |
| २१ | २० | छान्दाग्यो | छान्दोग्यो |
| २२ | १० | श्रौतमन्त्रैन्तं | श्रौतमन्त्रैस्तं |
| ४५ | १७ | दर्शनं | दर्शन |
| ५५ | १९ | नारदीय | नासदीय |
| ६६ | ८ | श्रृयते | श्रूयते |
| ७२ | २३ | श्रातसूत्र | श्रौतसूत्र |
| ८८ | १८ | इश्रुतौ | इतिश्रुतौ |

---

१ स्वशब्दस्यात्मवाचकत्वे ‘ स्वस्य ’ इति, आत्मीयवाचकत्वे च ‘ स्वस्याः ’ इति रूपम् ।

# ईशावास्योपनिषद् १।

## अथ ग्रन्थारम्भे शान्तिपाठः।

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

### आग्नेयभाष्यम्।

ऋष्यादयः२—ॐ पूर्णमित्यस्य मन्त्रस्य ब्रह्मर्षिरनुष्टुप् छन्दः सोमो देवता मङ्गलाचरणे विनियोगः।

---

### विवरणम्।

१ उपनिषदिति। उप पश्चाद्, अन्ते इति यावत्, निषीदति तिष्ठति निवसति इत्युपनिषद्। वैदिकग्रन्थानां परिशिष्टरूपो योऽन्तिमांशः स उपनिषदिति वेदान्त इति च ख्यायते। तस्य च ज्ञानप्रधानत्वात् सर्वेषामपि वेदानां ज्ञाने एव परिसमाप्तिः। श्रूयते हि "ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः" a इति। यद्वा उप उपरतः, नि निविष्टः सन्, सीदति तिष्ठति ज्ञानेऽनया इत्युपनिषद् ब्रह्मविद्या। तत्प्रतिपादकत्वाद् ग्रन्थोऽप्युपनिषदिति व्यवह्रियते। उक्तं हि "तस्मै स उपसन्नाय प्रोवाच ब्रह्मविद्याम्" इति मुण्डकोपनिषदि।

२ ऋष्यादय इति। "शान्तिगणस्य ब्रह्मा सोमोऽनुष्टुप्" इति हेमाद्रिः b।

---

(a) ऋग्वेदसंहिता १-१६४-३९. (b) चतुर्वर्गचिन्तामणौ, व्रतखण्डे प्रथमाध्याये मन्त्रविधाने।

ॐ ३ अदः कारणरूपं सत्यज्ञानात्मकं ब्रह्म, पूर्णम् अनन्तम् " सत्यं ज्ञानमनन्तं ब्रह्म " a " पूर्णं व्यापकं चैतन्यमनन्तमित्युच्यते " b इत्यादिश्रुतेः। इदम् कार्य्यरूपमाकाशकालात्मकं जगदपि, पूर्णम् अनन्तमित्येव। किञ्च पूर्णात् अमुष्माद्ब्रह्मणः सकाशात्, पूर्णम्, इदम् जगत्, उदच्यते आविर्भवति। श्रूयते च " तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः " c इति। 'कारणानुगुणं कार्यम्' इति न्यायात् कारणेऽनन्ते सति कार्य्येणाप्यनन्तेन भाव्यम्; " पूर्णात् पूर्णमुदचति पूर्णं पूर्णेन सिच्यते " d इति श्रुतेश्च।

एवं वै द्वे अनन्ते स्यातां तच्चायुक्तमित्यत आह— पूर्णस्येति। पूर्णस्य अस्य जगतः, पूर्णम् पूर्णत्वमित्यर्थः। आदाय गृहीत्वा मायामयत्वेन शून्यतां नीत्वा ४; कार्यकारणरूपयोर्द्वयोरनन्तयोः कार्यरूपमेकमपसार्य्येत्यर्थः। पूर्णम् अनन्तं कारणरूपं ब्रह्म, एव, अवशिष्यते एकमेवावतिष्ठते

---

३ ॐ इति। ब्रह्मवाचकं सत्यार्थस्य व्यञ्जकं पदमिदम्, प्रस्तुतस्य निगूढतत्त्वस्य दुरवगाहत्वेन गभीरानुशीलनयोग्यत्वमादरणीयत्वञ्च ज्ञापयति।

४ शून्यतां नीत्वेति। यज्जगतः स्वप्नवन्मायामयत्वं सैवास्य शून्यता, "मायामात्रमिदं द्वैतम्" e "स्वप्नं मायामात्रम्" f इत्यादिश्रुतेः। यथा रज्जुविवर्त्ते सर्पे रज्जुदैर्घ्यमनुगच्छति तथाऽस्मिन् ब्रह्मविवर्त्तेऽप्याकाशे ब्रह्मानन्त्यमनुगच्छत्येव। तत्र यथा रज्जुदैर्घ्यं सत्यम्,

---

(a) तैत्तिरीयारण्यक ८–१, तैत्तिरीयोपनिषत् २–१. (b) सर्वसारोपनिषत् १. (c) तैत्तिरीयारण्यक ८–१, तैत्तिरीयोपनिषत् २–१. (d) अथर्ववेदसंहिता १०–८–२९. (e) गौडपादकारिका १–१७. (f) नृसिंहोत्तरतापिनी १.

" यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिद् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वम् " a " तस्माद्धान्यन्न परं किञ्चनास " b " पुरुषान्न परं किञ्चित् " c इत्यादिश्रुतिभ्यः ।

तदनु ब्रह्मणः पूर्णत्वे जगतः शून्यत्वे च ज्ञाते सति निखिल शोकदुःखादीनां जगदन्तःप्रातित्वेन शून्यत्वज्ञानान्निःशेषोपशमो भवतीत्येतदाह—ॐ शान्तिः शान्तिः शान्तिरिति । त्रिर्वचनम्[५] अत्यन्तार्थम् । तथाहि श्रूयते " प्रपञ्चोपशमं शान्तं शिवमद्वैतम् " d "विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति " e " तरति शोकमात्मवित् " f इत्यादि ।

शान्तिरेषा बृहदारण्यकेऽपि पठ्यते g ।

---

सर्पदैर्घ्यं तु शून्यम् तथा ब्रह्मानन्त्यं सत्यम्; आकाशानन्त्यञ्च शून्यम् इतिदृष्टान्तेनैकस्यैव ब्रह्मणं आनन्त्यमवधार्य्यम् । वस्तुतस्तु नानन्तस्य कार्य्यं सम्भवति, तस्मादेतज्जगल्लक्षणं कार्यं मायामयमेव—दर्पणदृश्यमानाकाशतुल्यं स्वप्नदृष्टनगरीतुल्यं वा ।

५ त्रिर्वचनमिति । ब्रह्मसत्यत्वे जगन्मिथ्यात्वे च निश्चिते त्रिविधदुःखस्यात्यन्तनिवृत्तिरूपोऽत्यन्तपुरुषार्थोऽपि निश्चितो भवति, एतदर्थं शान्तिस्त्रिरुक्ता । त्रिविधदुःखञ्चाध्यात्मिकाधिदैविकाधिभौतिकभेदोपलक्षितम् । तस्यात्यन्तनिवृत्तौ मुक्तिः सिध्यति, सैव परमपुरुषार्थः । तथाचोक्तम् " भूतवस्तून्यशोचित्वा पुनर्जन्म न विद्यते " h

---

(a) श्वेताश्वतरोपनिषत् ३–९. (b) ऋग्वेदसंहिता १०–१२९–२. ( नासदीयसूक्त ) (c) कठोपनिषत् ३–११. (d) माण्डूक्योपनिषत् ७. (e) श्वेताश्वतरोपनिषत् ४–१४. (f) छान्दोग्योपनिषत् ७–१–३. ( g ) बृहदारण्यकोपनिषत् ५–१. (h) उत्तरगीता ३–२०

# अथ प्रथमो मन्त्रः।

ईशा वास्यमिदं सर्व्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥

ऋष्यादयः—ॐ ईशावास्यमित्यस्य मन्त्रस्य दधीच ऋषि-स्नुष्टुप् छन्दो भोगी देवता त्यागे विनियोगः।

ईष्ट इतीट् तेन ईशा ईशित्रा ऐश्वर्य्यवता १ परमेश्वरेण वासुदेवेन, वास्यम् वासनया प्रवर्त्तनीयम्; ईश्वरेच्छया २

१ ऐश्वर्य्यवतेति। जगन्नियन्त्रा, जगतः सृष्टिस्थितिप्रलयकर्त्रा।

२ ईश्वरेच्छयेति। ईशेतिशब्देन सृष्टिकर्त्तुः शक्तिप्रधानत्वं द्योतितम् "ईशते ईशानीभिश्च परमशक्तिभिः" a इतिश्रुतेः। सा च शक्तिर्वासनात्मिका, यां काम इत्याचक्षते। "कामस्तदग्रे समवर्त्तत" b "सोऽकामयत बहु स्याम्" c "स ईक्षत लोकान्नु सृजै" d "केनेषितं पतति प्रेषितं मनः" e इत्यादिबहुश्रुत्यनुरोधाद् वास्यमित्यस्येश्वरवासनया परिचाल्यमित्येवार्थोऽभिप्रेतः। तथा च वास्यशब्दोऽत्र वासनामेव सूचयति नाच्छादनम्, जगद्विशेषणत्वात्। जगच्चार्थतो व्युत्पत्तितोऽपि गतिशीलत्वान्नाच्छादनमपेक्षते किन्तु स्वस्य गते, प्रथमप्रवर्त्तने कस्यचित्प्रवर्त्तकस्य वासनाप्रणोदितां शक्तिमेव। दृष्टश्चैतत् सर्वत्र गतिशीले वस्तुनि। स्मृतिरपि भवति "वासनाद्वासुदेवस्य वासितं भुवनत्रयम्" f इति। अथ च वाश्यमिति पाठ-

(a) अथर्वशिरः ४. (b) ऋग्वेदसंहिता १०-१२९-४. (c) तैत्तिरीयारण्यक ८-६; तैत्तिरीयोपनिषत् २-६. (d) ऐतरेयारण्यक २-४-१-१, ऐतरेयोपनिषत् १-१. (e) केनोपनिषत् १-१. (f) महाभारत, अनुशासनपर्व (विष्णुसहस्रनाम, फलश्रुति २५)

परिचाल्यमितिभावः "ईशा वा सर्व्वमिदं प्रयुक्तम्" a इतिश्रुतेः। किम् ? इदम्, सर्व्वम्, यत्किञ्च यत्किञ्चित्, जगत्याम् पृथिव्याम्, जगत् पुनःपुनरतिशयेन वा गच्छतीतिजगत्; गमनशीलं नियतपरिवर्त्तमानं कर्त्तृत्वभोक्तृत्वादिलक्षणं नामरूपाख्यं सर्वमेव द्वैतरूपं विकारजातमित्यर्थः।

एवमीशावास्यमिदं सर्वमिति भावनया स्ववासनात्यागः कर्त्तव्य इत्याह—तेनेत्यादि। तेन ईशावास्यमित्यादिवाक्यसूचितेन सर्वमिदमीश्वरेच्छाधीनमितिविचारात्मकेन, त्यक्तेन त्यागेन ३ स्ववासनात्यागेनेत्यर्थः। भुञ्जीथाः सुखदुःखोपभोगेन ४ कालं नयस्व। "भुजोऽनवने" b इत्यात्मनेपदम्। एवं त्यक्त-

---

न्तेर तु "वश कान्तौ" c इत्यनुशासनात् कामनार्थकाद् वष्टेर्वास्यमितिशब्दस्य निष्पन्नत्वात् सर्वमवदातम्।

३ त्यागेनेति। निजेच्छाया व्याहतत्वात् स्वस्य पारतन्त्र्यबोधेन निजेच्छावर्ज्जनपुरःसरमीश्वरेच्छास्वीकरणेनेत्यभिप्रायः। न च मरणं त्यागः; मरणादूर्द्ध्वमपि वासनाया विद्यमानत्वात्। अतो वासनात्याग एव तात्पर्य्यम्।

४ सुखदुःखेत्यादि। सुखदुःखयोरदृष्टमूलत्वाददावदृष्टबुद्ध्योदेति त्यागः। अदृष्टस्य च जडत्वेन प्रेरकसापेक्षत्वादीश्वरेच्छाबुद्धिरुदेति। ईश्वरेच्छाया न्यायमूलत्वेन यथाकर्म्मफलप्रदत्वात् कर्मबुद्ध्यैव त्यागः प्रतिष्ठां गच्छति। एवञ्च त्यागमाश्रित्य निमित्तमात्रं भूत्वा विहितकर्माणि कुर्व्वन्नेव यथाप्राप्तानि फलानि भुङ्क्ष्व। सर्वत्र सर्वदा तितिक्षुर्भूत्वा वर्तस्वेत्यर्थः। एवंविधत्याग

---

(a) अथर्व्वशिखा २. (b) पाणिनीयाष्टाध्यायी १–३–६६. (c) पाणिनीय धातुपाठ, अदादिगण.

वासनस्त्वं कदाचिद्५भ्रमप्रमादालस्यादिवशात् कर्म्मत्यागमपीच्छन्, कस्यस्वित् कस्यचित्, धनम् सञ्चितं वित्तम्, मा गृधः लोभमाश्रित्य छलेन बलेन वा प्राप्तुं मा काङ्क्षीः । धनमित्युपलक्षणं भोगसाधनभूतानां यावद्विषयाणाम् । १ ।

---

एव पुरुषकारस्य चरमसीमा । स्मर्य्यतेऽपि "निमित्तमात्रं भव सव्यसाचिन्" a "एतान्यपितु कर्म्माणि सङ्गं त्यक्त्वा फलानिच । कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ " b इत्यादि ।

५ कदाचिदिति । ईश्वरेच्छास्वीकरणेन स्ववासनात्यागेपि न कर्मत्यागः कर्मणामीश्वरेच्छानुवर्त्तित्वादित्यत आह-भ्रमेत्यादि । भ्रमादिवशात् कर्म्मत्यागेऽनिष्टमापद्येत । तथाहि शरीरयात्राप्यकर्मणः खेदबहुला भवति । अकर्मा हि विनैव खेदेन सुसुखं कालं यापयितुं धनाद्यपेक्षते, तच्च कौशलप्रयुक्तेन वञ्चनहननादिना स्वाधिकर्त्तुं गृधते इत्येतदाह-लोभमाश्रित्येत्यादि । एतेन वासनात्याग एव विहितो न कर्म्मत्यागः । कर्मपराङ्मुखत्वं त्यागस्य दूषणं तच्च यत्नतः परिहार्य्यमिति तु वक्ष्यते । १ ।



---

(a) श्रीमद्भगवद्गीता ११-३३. (b) श्रीमद्भगवद्गीता १८-६.

# अथ द्वितीयो मन्त्रः ।

पूर्वमन्त्रे यस्त्याग उपदिष्टः स वासनात्याग एव; न कर्मत्याग इति विशदयन्नाह—

**कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः ।**
**एवं त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे ॥२॥**

ऋष्यादयः—ॐ कुर्व्वन्नित्यस्य मन्त्रस्य दधीच ऋषिर्भुरिगार्ष्यनुष्टुप् छन्दस्त्यागी देवता कर्म्मत्यागनिषेधे विनियोगः ।

अन्वयप्रदर्शनम्—इह कर्म्माणि कुर्व्वन् एव शतम् समाः जिजीविषेत् । एवम् । त्वयि इतः अन्यथा न अस्ति । नरे कर्म न लिप्यते ।

इह १, कर्म्माणि अग्निहोत्रादीनि २, कुर्व्वन् निर्व्वर्त्तयन्, एव ३, जिजीविषेत् जीवितुमिच्छेत् ४ । नर इति शेषः । शतम् समाः

१ इहेति । ईशावास्येऽस्मिन् जगति कर्मभूमावित्याशयः ।

२ अग्निहोत्रादीनीति । उपलक्षणमेतच्छास्त्रविहितानां स्वस्वकर्त्तव्यानाम् ।

३ एवेति । कर्माणि कुर्वन्नेव नतु परित्यजन्नित्यवधारणाद् वासनात्यागात्पूर्वं यथा कर्माणि करणीयानि तथैव तदुत्तरमपि । परमार्थप्राप्तिरूपस्य कर्मणो मुख्यत्वेपि व्यावहारिकाणि कर्माणि लोकसंग्रहार्थमनुष्ठेयान्येवेति भावः ।

४ जीवितुमिच्छेदिति । नात्मघातमिच्छेत् " प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि " ४ इतिश्रुतेः ।

(४) नादबिन्दूपनिषत् २१.

शतसंख्यकान् संवत्सरान् । उपलक्षणमेतत्; यावदायुरित्यर्थः । कर्माणि कुर्वतः सदैव ५ जिजीविषा भवेत् कर्महीनस्य तु आत्मघातेच्छैव । एवम्, अस्तीति शेषः; एवम्प्रकारक एव जगन्नियमोऽस्तीति भावः "यावज्जीवमग्निहोत्रं जुहुयात्" a इति श्रुतेः । तथा च स्मृतिः "यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्" b इति । त्वयि ६ त्यागशीले ७ ऽपि, इतः एतस्माज्जगन्नियमाद्, अन्यथा नियमान्तरम्, नास्ति । स्मर्य्यते च "नियतं कुरु कर्म्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्रापि च ते न प्रसिध्येदकर्मणः" c इति ।

---

५ सदैवेति । वार्द्धके दुर्गतावपीत्यर्थः । तथाच श्रूयते "एतद्वै जरामर्य्यमग्निहोत्रं सत्रम्" d इति ।

६ त्वयीति । त्वयीत्युपलक्षणं ब्रह्मादिस्थावरान्तानां सृष्टिजातानाम् । न हि कदाचिदप्यस्य जगन्नियमस्य स्वल्पोपि व्यतिक्रमः क्वचिदपि सम्भवति । न कोपि पूर्णानन्दनिमग्नो दुःखभरोपहतो वाऽस्मान्नियमात् पृथग् भवितुमर्हति; अतस्त्वमपि सर्वसाधारणमेतं नियममनुवर्तयन्नेव जिजीविषेः ।

७ त्यागशील इति । जीवन्मुक्तानामपि लोकोपकाराय कर्माचरणीयम् । तथा च श्रूयते "क्रियावानेष ब्रह्मविदां वरिष्ठः" e "क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः" f इत्यादि । स्मर्यते च "नमे पार्थास्तिकर्त्तव्यं त्रिषुलोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥" g इत्यादि ।

---

(a) कुमारिलभट्टेन तन्त्रवार्तिके (२–४–१) लिखितं बह्वृचब्राह्मणाध्वर्य्युब्राह्मणस्थेयं श्रुतिरिति. (b) श्रीमद्भगवद्गीता १८–५. (c) श्रीमद्भगवद्गीता ३–८. (d) तैत्तिरीयारण्यक १०–६३–४; महानारायणोपनिषत् २५–१. (e) मुण्डकोपनिषत ३–१–४. (f) मुण्डकोपनिषत् ३–२–१०. (g) श्रीमद्भगवद्गीता ३–२२.

कर्मलेपादिदोषदर्शनात् तवैतन्नियमान्यथाकरणेच्छा चेत् तत्राह—न कर्मेत्यादि। नरे कर्म्मकुर्वति पुरुषे, कर्म न लिप्यते देहलिप्तपङ्कादिवदनभिमतं न भवति; मृत्युज्जिजीविषाया अन्तरङ्गत्वात् ८ कर्त्तुरीप्सिततममेव भवति। २।

---

८ अन्तरङ्गत्वादिति। कर्त्तव्यानुरोधाद् देहत्यागोपि दृश्यते। किञ्च न केवलं कर्मार्थं जीवनम्, अपितु तदर्थं जीवनोत्सर्गोऽप्याद्रियते। तस्माज्जीवनादपि कर्मैवान्तरङ्गम्। कर्मत्यागेऽनन्तवासनाजालरूपं चित्तमालिन्यं भृशं वर्द्धेत एव, कर्महीनचित्तस्य स्वच्छन्दवर्तित्वात्। तथाहि कर्म्मत्यागे वासनात्यागोऽप्यसाध्य इत्युभयभ्रष्टो भवति कर्म्मत्यागी। चित्तगतवासनारूपमालिन्यस्य परिशोधकत्वेन कर्म्मैवेप्सिततममित्यप्यवगन्तव्यम्। तथा च श्रुतिः "यदा वै करोति अथ निस्तिष्ठति, 'नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठाति, कृतिस्त्वेव विजिज्ञासितव्या" a इति। स्मृतिश्च "स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः" b "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" c इत्यादिः। २।



---

(a) छान्दोग्योपनिषत् ७–२१. (b) श्रीमद्भगवद्गीता १८–४५. (c) श्रीमद्भगवद्गीता १८–५.

# अथ तृतीयो मन्त्रः ।

पूर्व्वमन्त्रेण जिजीविषां विधायानेनाऽऽत्मघातं प्रत्यवायप्रदर्शनमुखेन निषेधति १—

**असुर्य्या नाम ते लोका अन्धेन तमसावृताः ।**
**ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥३॥**

ऋष्यादयः—ॐ असुर्य्या इत्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्दो जीवो देवता आत्मघातनिषेधे विनियोगः ।

असुर्य्याः; सु सुकर्मणि रमन्त इति सुराः सर्वप्राणिहिते रताः तद्विपरीता असुराः कुकर्मरताः प्राणिपीडनशीलाः परघातका २ इत्यर्थः; तेषां योग्या मरणानन्तरमावासभूता इत्यसुर्य्याः । नाम प्रसिद्धाः, ते, लोकाः लोकान्तराणि; सन्ति ।

कीदृशास्ते लोकाः ? इत्याह—अन्धेन तमसावृता इति । अन्धेन

१ निषेधतीति । साक्षान्निषेधाभावेपि ' फलं यस्यानभिमतं कर्मापि तदनभिमतम् ' इति न्यायान्निषेधोऽवतरत्येव ।

२ परघातका इति। "प्रवृत्तिञ्च निवृत्तिं च जना न विदुरासुराः" a. " प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः" b इति गीतावाक्यप्रामाण्यादसुराणां परघातित्वम् ।

(a) श्रीमद्भगवद्गीता १६–७. (b) श्रीमद्भगवद्गीता १६–९.

अदर्शनात्मकेन ३, तमसा अन्धकारेण, आवृताः निरवच्छिन्नमाच्छादिता अन्धतामिस्रा ४ इति ख्याताः। तान् लोकान्, ते जनाः, प्रेत्य ५ मृत्वा, अभिगच्छन्ति यथाकर्म्म यथाश्रुतं प्राप्नुवन्ति। के ते जनाः? ये, के, च, आत्महनः आत्मानं स्वदेहाधिष्ठातारं जीवसंज्ञं घ्नन्ति जुगुप्सादिवशाच्छोकमोहादिवशाद्वा स्वदेहच्युतं कुर्वन्ति कारयन्तीति आत्महनः, जनाः ६ जननशीलाः। परघातपराणामसुराणां तुल्यदण्डत्वाय ७ आत्मघातिनामप्यसुर्य्यलोकाभिगनमिति चशब्देन सूचितम्।

---

३ अदर्शनात्मकेनेति। चक्षुष्मन्तमप्यन्धं कुर्वाणेन प्रगाढेनेतियावत्।

४ अन्धतामिस्रा इति। भयावहा अतिदारुणदुःखदा अत एवानभिमता इत्यर्थः। तद्विपरीतलोकोपि श्रूयते "यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम्" a "यत्र राजा वैवस्वतो यत्रावरोधनं दिवः" b इत्यादि।

५ प्रेत्येति। इमं देहं त्यक्त्वा प्रेतदेहं प्राप्येत्यर्थः।

६ आत्महनः, जना इति। आत्मघातासम्भवेपि देहपातेनैवात्मघातिन इति लोके व्यवह्रियमाणाः; पूर्वमन्त्रोपदिष्टां जिजीविषामवज्ञाय स्वेच्छं म्रियमाणा इति भावः। अत्रात्महन इति पदेन नात्मज्ञानहीनानां ग्रहणं किन्त्वात्माघातिनामेव, "अनन्दा नाम ते लोका अन्धेन तमसावृताः। ताँस्ते प्रेत्याभिगच्छन्त्यविद्वाँसोऽबुधो जनाः॥" c इति श्रुतिस्वारस्यादनन्दासुर्य्ययोर्भिन्नत्वेनाविद्वदात्मघातिनोरपि भिन्नत्वात्।

७ तुल्यदण्डत्वायेति। कथमुभयोस्तुल्यदण्डत्वमितिचेत् इत्थम्-

---

(a) ऋग्वेदसंहिता ९-११३-७. (b) ऋग्वेदसंहिता ९-११३-८.
(c) बृहदारण्यकोपनिषत् ४-४-११.

दधीचेरिव परार्थे देहोत्सर्गः, शूरस्येव रणाभिमरणम्, योगिन इव तनुत्यागः, पतिव्रतायाश्च चितारोहणं नात्मघातान्त र्भवति। स्मर्य्यते च " द्वाविमौ पुरुषव्याघ्र सूर्य्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ " a इति । ३ ।

---

आत्मघातिपरघातिनोर्न कश्चिद्विशेषोऽस्ति; यतः स्वात्मैव सर्वेषां प्रियतमं वस्तु, न कर्हिचित् परात्मा स्वात्मनः प्रियतरो भवितुम- र्हति " न वाऽरे सर्व्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति । तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽ- न्यस्मात्सर्व्वस्मादन्तरतरं यदयमात्मा ॥" b इति श्रुतेः। तथा च ये स्वात्मघाते समर्थाः किमुत ते परघाते । यद्यपि भयादिकारणबाहु- ल्यात्ते नैव तत्र शक्नुवन्ति, तथाप्यन्तःकरणवृत्तेस्तुल्यत्वात् परघा- तिनामसुराणां यादृक् फलमात्मघातिनामपि तादृगेव । ३ ।



---

(a) महाभारत, उद्योगपर्व ३३–६१. (b) बृहदारण्यकोपनिषत् १–४–८.

# अथ चतुर्थो मन्त्रः ।

यैषा प्रेत्य पुनर्लोकान्तरप्राप्तिः पूर्वत्र प्रतिपन्ना सा चात्मनोऽविनाशित्वे सम्भवतीत्यधुनाऽविनाशित्वं प्रतिपादनीयमित्यभिप्रेत्य विनाशिभ्यो जडादिभ्यस्तस्य विपरीतधर्म्मत्वं प्रतिपादयति—

अनेजदेकं मनसो जवीयो
नैनद्देवा आप्नुवन् पूर्व्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्
तस्मिन्नपो मातरिश्वा दधाति ।४।

ऋष्यादयः—ॐ अनेजदित्यस्य मन्त्रस्य दधीच ऋषिस्त्रिष्टुप् छन्दः परमात्मा देवता अविनाशित्वे विनियोगः ।

तत्र प्रथममात्मतत्त्वस्य स्थावररूपाज्जडाद्विपरीतत्वं प्रतिपादयति—अनेजदिति । प्रकृतमात्मतत्त्वम् अनेजत् " एजृ कम्पने " [a] कम्पनं चलनम् यच्चलनधर्म्मवत्तदेजत् तद्विपरीतमनेजत् अचलम्; सर्वथा गतिशून्यमित्यर्थः । जडजगच्चलम् " यदिदं किञ्च जगत्सर्वं प्राण एजाति निःसृतम् " [b] इति श्रुतेः । एतदात्मतत्त्वन्त्वचलम् " शुद्धःस्थिरोऽचलश्च " [c] इति श्रुतेः । अतो जडविपरीतत्वम् ।

(a) पाणिनीयधातुपाठ, भ्वादिगण. (b) कठोपनिषत् ६-२. (c) मैत्रायणीयोपनिषत् २-७.

अथात्मतत्त्वस्य देहविपरीतत्वं प्रतिपादयति–एकमिति। एतदात्मतत्त्वम् एकम् अखंण्ड निरवयवम्; देहस्तु सावयवः "आत्मा विनिष्कलो ह्येको देहो बहुभि[१] रावृतः" (a) इत्याचार्य्यपादशङ्करवचनात। अतो देहविपरीतत्वम्।

अथ मनो विपरीतत्वं प्रतिपादयति–मनसो जवीय इति। एतदात्मतत्त्वं मनसः सुखदुःखादिभोक्तुरन्तःकरणात, जवीयः वेगवत्तरम्। दुःखादिभ्यो भयेन पलायितमपि मनस्तैरभिभूयत एव; नात्मा दुःखादीनां भोक्ता किन्तु तेषां द्रष्टाऽतस्तैर्नाभिमवितुं शक्यते सदैव मनोधर्म्मानतीत्य वर्त्तते इत्येतदात्मनो मनसो जवीयस्त्वम्। वैलक्षण्यमेतद्विपरीतत्वगर्भम्। दुःखादिभिरनभिभूतस्याभिभूताद्विपरीतत्वमभ्युपगम्यते "अथ यथाऽयःपिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषः" (b) "अस्ति खल्वन्योऽपरो········योऽयं कर्म्मफलैरभिभूयमानः·········परिभ्रमति" (c) इत्यादिश्रुतेः। अतो मनोविपरीतत्वम्।

अथ ज्ञानेन्द्रियविपरीतत्वं प्रतिपादयति–नैनद्देवा आप्नुवन् पूर्व्वमर्षदिति। देवाः द्योतनात्मका ज्ञानेन्द्रियाणीत्यर्थः, एनद्

---

१. बहुभिरिति। "शरीरमिदम्...अस्थिभिश्चितं मांसेनानुलिप्तं चर्म्मणावनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चामयैर्बहुभिः परिपूर्णम्" (d) इति श्रुत्युक्तास्थिमांसादिभिर्बहुभिरावृत आच्छादितः; तत्संघात इत्यर्थः।

---

(a) अपरोक्षानुभूति १७. (b) मैत्रायणीयोपनिषत् ३–३. (c) मैत्रायणीयोपनिषत् ३–२. (d) मैत्रायणीयोपनिषत् ३–४.

आत्मतत्त्वम्, न आप्नुवन् न प्राप्तवन्तः स्वगणमध्ये परिगणयितुं नाशक्नुवन् "नाहं भूतगणो देहो नाहं चाक्षगणस्तथा" (a) इति शङ्करभगवत्पादवचनात् । कुतः ? यतः पूर्व्वम् अर्षत् 'ऋष गतौ' प्रथममेव गतम्; इन्द्रियेभ्योपि पूर्वं वर्त्तमानत्वादनिन्द्रियमित्यर्थः "अनिन्द्रियमविषयमकरणम्" (b) "अहमस्मि प्रथमजा ऋतस्य पूर्व्वं देवेभ्यः" (c) "अर्वाग् देवा अस्य" (d) "यदन्यद्देवेभ्यश्च प्राणेभ्यश्च" (e) "अचक्षुःश्रोत्रं तदपाणिपादम्" (f) "अरसमगन्धमचक्षुष्कमश्रोत्रम्" (g) इत्यादिश्रुतेः । अतो ज्ञानेन्द्रियविपरीतत्वम् ।

अथ कर्मेन्द्रियविपरीतत्वं प्रतिपादयति—तद्धावतोऽन्यानत्येति तिष्ठादिति । तद् आत्मतत्त्वम्, धावतः सततधावनशीलान् स्वे स्वे व्यापारेऽविरतं चेष्टमानान्, अन्यान् उक्तेभ्योऽन्यान् ज्ञानेन्द्रियातिरिक्तानि कर्मेन्द्रियाणीत्यर्थः । अत्येति अतीत्य वर्त्तते तेभ्योऽप्यतिरिक्तं भवतीत्यर्थः । यतः तिष्ठत् स्वयमधावत् न कर्मेन्द्रियाणीव चेष्टमानमित्यर्थः "निष्कलं निष्क्रियं शान्तम्" (h) "अकर्त्तैवावस्थः" (i) इत्यादिश्रुतेः । अतः कर्मेन्द्रियविपरीतत्वम् ।

अथ प्राणापानादिविपरीतत्वं प्रतिपादयति—तस्मिन्नपो मातरिश्वा दधातीति । तस्मिन् आत्मतत्त्वे देहे सत्येव, मातरिश्वा

---

(a) अपरोक्षानुभूति १३. (b) नृसिंहोत्तरतापिनी ९ (c) तैत्तिरीयारण्यक १०–६, तैत्तिरीयोपनिषत् ३–१०–६. (d) ऋग्वेदसंहिता १०–१२९–६. (e) कौषीतकिब्राह्मणोपनिषत् १–६. (f) मुण्डकोपनिषत् १–६. (g बृहदारण्यकोपनिषत् ३–८–८. (h) श्वेताश्वतरोपनिषत् ६–१९. (i) मैत्रायणीयोपनिषत् २–७.

वायुः प्राणवायुरित्यर्थः "वायुर्वा ......मातरिश्वा" a "वायुः प्राणो भूत्वा नासिके प्राविशत्" b इत्यादिश्रुतेः। अत्र प्राणे-नापानादयोपि गृह्यन्ते "प्राणोऽपानो व्यान उदानः समानोऽन इत्येत् सर्व्वं प्राण एव" c इतिश्रुतेः। अपः कर्माणि हृत्स्पन्द-रस-रक्तसंचालनादीनि "अप इति कर्मनामेति निघण्टुः" d, दधाति विदधाति करोतीति यावत्। "प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति" e इति शङ्करभगवत्पादवचनम्। एवं हि प्राणादेः आत्मसापेक्षत्वम् २ आत्मनस्तु न

२ आत्मसापेक्षत्वमिति। तस्मिन् आत्मतत्त्वे देहे सत्येव, मातरिश्वा निःश्वासवायुः, अपः वाष्पम्, दधाति धारयति प्राणरूपेण प्रवहतीत्यर्थः। जीवद्दशायां निःश्वासे यद्वाष्परूपं जलमुपलभ्यते (न तु मृतावस्थायाम्) तदेवास्य प्राणरूपत्वम्। तच्च "आपोमयः प्राणः" f "प्राणो वा आपः" g "प्राणस्यापः शरीरं यावानेव प्राणस्तावन्त्य आपः" h इत्यादिश्रुतिशतानुगृहीतम्। इत्थं प्राणस्य बाष्पधारणे आत्मापेक्षेति प्रकारान्तरेणापि प्राणादेरात्मसापेक्षत्वम्। तत्र "व्यापारं देहसंस्थः प्रतिवपुरखिलं पञ्चवृत्त्यात्मकोऽसौ", i इत्यादि शङ्करभगवत्पादवचनमनुसन्धेयम्। केचित्तु प्राणस्पन्दापगमे आत्मनाशः, तत्सत्तायाञ्चात्मसत्ता इति विवदन्ते। श्रुतिरेषा तानप्यनुकम्पयितुमुपदिशति—आत्मसत्तायां सत्यां हि प्राणस्पन्दसत्ता; आत्मसत्ता तु प्राणापगमेऽपीति। तथाच-श्रुत्यन्तराणि "आत्मनः प्राणः" j "आत्मन एष प्राणो

(a) केनोपनिषत् २१. (b) ऐतरेयारण्यक २-४-२-४. (c) वृहदारण्यकोपनिषत १-५-३. (d) निरुक्त २-१. (e) ब्रह्मसूत्रशाङ्करभाष्य ३-३-५४. (f) छान्दोग्योपनिषत् ६-५-४. (g) महानारायणोपनिषत् १४-१, (h) वृहदारण्यकोपनिषत् १-५-१२ (i) वेदान्त केसरी (शतश्लोकी) ८९. (j) छान्दोग्योपनिषत् ७-२६-१.

तत् ३ इति श्रुतिरहस्यम् । वैलक्षण्यमेतद्विपरीतत्वगर्भितम्; निरपेक्षस्य सापेक्षविपरीतत्वात् । तथाच श्रूयते "यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते" a "न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥" b "अप्राणो ह्यमनाः" c "अस्मिन् हीमे प्राणाः प्रतिष्ठिताः" d इत्यादि । अतः प्राणापानादिविपरीतत्वम् ।

इत्थं जडादिप्राणान्तेभ्यो विनाशिभ्यो विपरीतधर्म्मा ४ अयमात्मेति प्रतिपादितम्; तेन च तस्य अविनाशित्वम् ५ सुतरा

---

जायते" e "स प्राणमसृजत" f "एतस्माज्जायते प्राणः g "केन प्राणः प्रैति प्रथमं युक्तः" h "स उ प्राणस्य प्राणः" i इत्यादीनि । एतच्च युक्त्यापि शङ्करभगवत्पादैरैकात्म्याधिकरणे j स्फुटीकृतम् ।

३ तदिति । प्राणादिसापेक्षत्वमित्यर्थः ।

४ विपरीतधर्म्मेति । चक्षुषो द्रष्टा······वाचो द्रष्टा मनसो द्रष्टा···प्राणस्य द्रष्टा,······सर्वस्य द्रष्टा ततः सर्व्वस्मादन्यो विलक्षणः·········सर्वस्य साक्षी ततोऽविक्रियो महाचैतन्यः" k इत्यादिश्रुतावपि सर्वस्माद्विनाशिनो दृश्यजाताद् द्रष्टृरूपस्यात्मनो विपरीतधर्म्मत्वं प्रसिद्धम् ।

५ अविनाशित्वमिति । तथाच स्मृतिनिर्वचनानि "नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम्" l "यः स सर्वेषु भूतेषु नश्यत्सु

---

(a) केनोपनिषत् ८. (b) कठोपनिषत् ५–५. (c) मुण्डकोपनिषत् २–१–२. (d) छान्दोग्योपनिषत् ३–१२–४. (e) प्रश्नोपनिषत् ३–३. (f) प्रश्नोपनिषत् ६–४. (g) मुण्डकोपनिषत् २–१–३. (h) केनोपनिषत् १. (i) केनोपनिषत् २. (j) ब्रह्मसूत्रशाङ्करभाष्य ३–३–५३ (अधि० ३० ). (k) नृसिंहोत्तरतापिनी २. (l) अपरोक्षानुभूति ५.

प्रतिपादितं भवतीति किमु वक्तव्यम्। तथा च श्रुत्यन्तराणि "व्यतिरिक्तं जडं सर्वं स्वप्नवच्च विनश्यति। चिज् ६ जडानान्तु यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः" ॥ a "अविनाशी वाऽरे अयमात्माऽनुच्छित्तिधर्म्मा" b "न हन्यते हन्यमाने शरीरे" c "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" d इति। ४

न विनश्यति" e "विनश्यत्स्वविनश्यन्तम्" f "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनः........" g इत्यादीनि।

६ चिदिति। चिच्छब्देनात्र चिदाभासो गृह्यते, चिदाभासोऽन्तःकरणमित्यर्थः। ४



(a) स्कन्दोपनिषत् ३. (b) वृहदारण्यकोपनिषत् ४-५-१४. (c) कठोपनिषत् २-१८. (d) कठोपनिषत् २-२१. (e) श्रीमद्भगवद्गीता ८-२०. (f) श्रीमद्भगवद्गीता १३-२७. (g) श्रीमद्भगवद्गीता २-१८.

# अथ पञ्चमो मन्त्रः।



नन्वेवमात्मनोऽविनाशित्वेपि अनेजदिति गतिशून्यत्वप्रतिपादनेन कथं परलोकगमनमित्याशङ्क्याह—

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्व्वस्य तदु सर्वस्यास्य बाह्यतः।५।**

ऋष्यादयः—ॐ तदेजतीत्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्द आत्मा देवता लोकान्तरगमने विनियोगः।

तत् पूर्वोक्तमात्मतत्त्वम्, एजति चलति "एजत् प्राणन्निमिषच्च यत्" a इति श्रुतेः। तदु एव च, न एजति नैव चलति "स्थिरमचलममृतमच्युतं ध्रुवम्" b इति श्रुतेः। एकमप्यात्मतत्वमेजाति नैजति च "चञ्चलो ह्यचलो ह्यसि····शान्ताशान्तविवर्जितः" c "शान्ताशान्तस्वरूपात्मा नैकात्मत्वविवर्जितः" d इत्यादि च श्रूयते। कथमेतदिति चेदत्रोच्यते—तदन्तरस्य सर्वस्य तदु सर्व्वस्यास्य बाह्यत इति। तदु आत्मतत्वम्, अस्य सर्वस्य

(a) मुण्डकोपनिषत् २-२-१. (b) मैत्रायणीयोपनिषत् ६-२३. (c) तेजोबिन्दूपनिषत् ५-६८. (d) तेजोबिन्दूपनिषत् ४-६४.

स्थावर १ जङ्गमात्मकस्य जगतः, अन्तः जीवरूपेणा२ भ्यन्तरे प्रविष्टम् उपाधिसहितमित्यर्थः । श्रूयते च "स इदं सर्व्वमसृजत; तत्सृष्ट्वा तदेवानुप्राविशत् ।" a इति । तदु तदेव, परमात्मरूपेण सर्वस्यास्य, वाह्यतः वहिर्भूतम् उपाधिरहितमित्यर्थः । अन्यत्रापि श्रूयते "असङ्गो न हि सज्जते" b इति । इत्थमेकमेवान्तर्बहिश्च । "एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च" c इति च श्रूयते । एवञ्चैकमेवात्मतत्त्वमुपाधिसहितत्वेन जीवात्मरूपत्वादेजति; उपाधिरहितत्वेन परमात्मरूपत्वान्नैजति चेति भावः । अत एव तद् आत्मतत्त्वम् जीवरूपेण, दूरे व्यवहितदेशे वहुष्वपि लोकान्तरेष्वित्यर्थः संसरतीति शेषः; "यत्ते यमं वैवस्वतं मनोजगाम ३

१ स्थावरेति । अचेतनवत्प्रतीयमानेषु जडेष्वप्यात्माऽस्ति, इति न केवलं प्राचीनतरं किन्तु श्रुत्यापि घोषितम् । तथा हि "परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यन्यत्रान्यन्न विजानात्यनुभूतेर्माया च तमोरूपानुभूतिस्तदेतज्जडं मोहात्मकम्" d इति ।

२ जीवरूपेणेति । नामरूपभूतमुपाधिमादाय सृष्ट्यन्तः प्रवेश एव जीवरूपत्वम् "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" e इतिश्रुतेः ।

३ मनोजगामेति । आत्मप्रतिविम्बाभियुक्तं सत् मनोबुद्ध्यादिसंघातंरूपमन्तःकरणमेव जीवरूपेण परिणमते । तस्यैव दूरादिगम-

(a) तैत्तिरीयारण्यक ८–६, तैत्तिरीयोपनिषत् २–६. (b) वृहदारण्यकोपनिषत् ४–४–२२. (c) कठोपनिषत् ५–९. (d) नृसिंहोत्तरतापिनी ९–१. (e) छान्दोग्योपनिषत् ६–३–२.

दूरकम् a" इति श्रुतेः । तदु तदेव परमात्मरूपेण पुनः, अन्तिके अव्यवहिते ४ अखण्डैकनिजरूपे वर्त्तते " स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" b " स्वयमेवात्मनि स्वस्थः········ स्वात्मन्येव सुखासीनः स्वात्ममात्रावशेषकः " c इत्यादिश्रुतेः । इत्थञ्चैकस्यैव दूरान्तिकत्वम् । तथाच श्रुत्यन्तरे निर्वचनम् " आसीनो दूरं व्रजति शयानो याति सर्वतः" d इति, " दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् "e इति च।

इत्थञ्चात्मनः प्रेत्य लोकान्तराभिगमनं यदसुर्य्येति मन्त्रेण प्रस्तुतं तन्न केवलमाप्तवचनेन सम्भावितम्, अपितु श्रुत्यनुमाणि तद्युक्त्याऽप्युपपन्नम् इत्यात्मघातो नैव कर्त्तव्य इति मन्त्रत्रयता-

---

नम् । तथाच शङ्करभगवत्पादाचार्य्यवचनम् " जीवत्वं यात्यकस्मादतिविमलतरे बिम्बितं बुद्ध्युपाधौ " f इति " आत्माभियुक्तं व्रजति ननु मनः कर्हिचिन्नान्तरात्मा " g इति च ।

४ अव्यवहित इति । व्यवधानन्तु देशकालरूपोपाधिकृतम्, तद्धि सर्वोपाधिरहिते परमात्मनि नास्त्येव । तथाच श्रुतयः " आत्मन आकाशः सम्भूतः" h "तदक्षरम्...अभिवदन्ति...अनाकाशम्" i अक्षरात्सञ्जायते कालः" j " सोऽकालः " k " अतश्चिद्धन एव " l " आत्मा कृत्स्नः प्रज्ञानघन एव " m इत्यादयः ।

---

(a) ऋग्वेदसंहिता १०—५९—१. (b) छान्दोग्योपनिषत् ७-२४-१. (c) तेजोबिन्दूपनिषत् ३—२४. (d) कठोपनिषत् २—२०. (e) मुण्डकोपनिषत् ३-१-७ (f) वेदान्तकेसरी. ( शतश्लोकी ) ५०. (g) वेदान्तकेसरी ( शतश्लोकी ) २९. (h) तैत्तिरीयारण्यक ८—१, तैत्तिरीयोपनिषत् २—१. (i) बृहदारण्यकोपनिषत् ३—८—८. (j) अथर्वशिरः ६ (k) मैत्रायणीयोपनिषत् ६—१४. (l) नृसिंहोत्तरतापिनी ८. (m) बृहदारण्यकोपनिषत् ४—५—१३.

त्पर्यम् । "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" a "अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते" b "अयमात्मेदं शरीरं निहत्यान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा अन्येषां वा भूतानाम्" c "यमादहं ५ वैवस्वतात् सुबन्धोर्मन आमरम्" d इत्यादि श्रुत्यन्तरेष्वपि प्रसिद्धम् । ५ ।

५ यमादहमिति । अत्रेदमृग्वेदीयमुपाख्यानमनुसन्धेयम् । पुरा सुबन्धुर्नामावनिसुरो राज्ञः सनातेः पुरोधा आसीत्, स खलु विद्विषः कूटाभिचारात् मृतिं गतः । अथ तद्भ्राता श्रौतमस्त्रैन्तं पुनरानयदिति श्रुतेरर्थः शङ्करभगवत्पादैर्व्याख्यातः e । ५ ।



(a) छान्दोग्योपनिषत् ६–११–३. (b) ऐतरेयारण्यक ५–४, ऐतरेयोपनिषत् २–४. (c) बृहदारण्यकोपनिषत् ४–४–४. (d) ऋग्वदेसंहिता १०–६०–१०. (e) वेदान्तकेसरी ( शतश्लोकी ) ३९.

# अथ षष्ठो मन्त्रः ।

यदात्मज्ञानमात्मघातप्रतिषेधप्रसङ्गेन प्रतिपादितम्; तत् स्वत एवात्मघातं निराकरोति तत्कारणस्य निराकरणादित्याह—

**यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**आत्मानञ्च सर्वभूतेषु ततो न विजुगुप्सते ॥६॥**

ऋष्यादयः—ॐ यस्त्वितयस्य मन्त्रस्य दधीच ऋषिर्निच्यृदार्ष्यनुष्टुप् छन्दो ज्ञानी देवता विश्वप्रेमोपदेशे विनियोगः ।

तुशब्दः पक्षान्तरं सूचयति। तथाहि आत्मघातनिषेधोऽज्ञानिजनमुद्दिश्य प्रस्तुतो न तु ज्ञानिजनम्; इदञ्च ज्ञानिजनमुद्दिश्य प्रस्तूयते । यः आत्मज्ञानी, सर्व्वाणि भूतानि जीवात्मरूपाणि, आत्मनि परमात्मनि, एव, अनु अनुक्षणम्, पश्यति गुरूपदेशोपबृंहितश्रुत्यनुकूलविचारेणावलोकयति । आत्मानम् परमात्मानम्, च, सर्वभूतेषु तेष्वेव सर्वेषु जीवात्मसु प्राणिमात्रेषु । "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" a इत्यमरः। अनुपश्यति "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि" b "एको देवः सर्वभूतेषु गूढः सर्वव्यापी" c "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति" d इत्यादिश्रुतिस्मृतिप्रामाण्यात् । यथा सर्वाणि भूतान्याकाशेऽवस्थितानि सर्वभूतेषु चाकाशोऽनुस्यूतः

(a) नामलिङ्गानुशासन ४-४-८०. (b) कैवल्योपनिषत् १-१०. (c) श्वेताश्वतरोपनिषत् ६-११. (d) श्रीमद्भगवद्गीता ६-३०.

"आकाशे तदोतश्च प्रोतं च" a इति श्रुतेः; तथा सर्वे जीवात्मानः परमात्मन्यवस्थिताः परमात्मा च सर्वेषु जीवात्मस्वनुस्यूतः। श्रूयते च "आकाशसदृशोऽस्म्यहम्" b "आत्मा ह्याकाशवत्" c इत्यादि । इत्याकाशदृष्टान्त एवात्राभिमतोऽस्या एवोपनिषदोऽन्ते माध्यन्दिनशाखायाम् 'ॐ खं ब्रह्म' इति पाठानुरोधात्; तत्र चाकाशरूपं ब्रह्माख्यमात्मतत्त्वं ध्यायेदित्यर्थात् ।

अथ प्रकृते किमायातमित्याह—ततो न विजिगुप्सत इति । ततः तस्मादेवानुदर्शनात्, न विजुगुप्सते जुगुप्सां घृणां न करोति; स इति शेषः । "जुगुप्सा करुणे घृणे" d इत्यमरः "घृणा जुगुप्सायाम्" e इति हलायुधः । न कदापि तीव्रक्रोधाक्रान्तस्वान्तः १ संन्नात्मघाते प्रवर्त्तते इत्यर्थः । 'क्रोधी नियतमात्मद्रोही भवति' इति त्वतिरोहितम् । सर्वा हि जुगुप्सा विषमदर्शिनो भवति न वै समदर्शिन इति समदर्शिनः सर्वजुगुप्साऽभावादुदारदृष्टौ सत्यां विश्वप्रेम २ स्वत एव सिध्यति। तदुक्तम् "उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः।

१ तीव्रक्रोधाक्रान्तस्वान्त इति । अज्ञोऽविचारवान् भेददर्शनं कुर्वन् घृणां पोषयति सा च पुष्टा सति तीव्रक्रोधे परिणमते येनाभिभूतोऽयमात्मघाते परघाते वा प्रवर्त्तते ।

२ विश्वप्रेमेति । सर्वत्र समदर्शनेन घृणानिमित्तं दोषदृष्टिरपगच्छति ततो निःशेषं घृणापगच्छति,तस्माच्च विश्वचक्रं यथा प्रवर्त्तते तथैव प्रवर्तताम् ( न किञ्चिदपि तत्रानभीष्टम्, सर्वं तत् सुकृतम् )

(a)बृहदारण्यकोपनिषत् ३-८-४.(b) तेजोबिन्दूपनिषत् ३-१०. (c) गौडपादकारिका ३-३. (d) नामलिङ्गानुशासन३-३-५१.(e) अभिधानरत्नमाला५-१४.

अयत्नतो भवन्त्यस्य नतु साधनरूपिणः ॥" a "त्वयि मयि चान्यत्रैको विष्णुः; व्यर्थं कुप्यसि मय्यसहिष्णुः।" b इत्यादि। तथा च श्रूयते "य इदं मध्वदं वेदात्मानं जीवमन्तिकात्। ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वैतत्" c "दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत्। सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥" d इति। ६।

---

इति दृढनिश्चयात्मिका शान्तिरुदेति, सैव विश्वप्रेमेत्युच्यते। तथा च श्रूयते "तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यत इति। यद्वै तत् सुकृतं रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति।" e इति। ६।



---

(a) नैष्कर्म्यसिद्धि (सुरेश्वराचार्य) ४-६९. (b) शङ्करभगवत्पादाचार्यप्रणीत पञ्जरिकास्तोत्र ८. (c) कठोपनिषत् ४-५. (d) तेजोबिन्दूपनिषत् १-२९. (e) तैत्तिरीयारण्यक ८-७; तैत्तिरीयोपनिषत् २-७.

# अथ सप्तमो मन्त्रः ।



न केवलं जुगुप्सावशादात्मघातः किन्तु शोकमोहादिवशादपि; इत्यतो ज्ञानारूढदशायां जुगुप्साऽभावं प्रतिपाद्येदानीं ज्ञानपरिपाकदशायां शोकमोहादेरप्यभावं प्रतिपादयति—

**यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र कोमोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

ऋष्यादयः—ॐ यस्मिन्नित्यस्य मन्त्रस्य दधीच ऋषिर्निंच्यृदार्ष्यनुष्टुप् छन्दस्तत्त्वज्ञानी देवता वासनाक्षये विनियोगः ।

यस्मिन् यत्र काले ज्ञानपरिपाकदशायामित्यर्थः, सर्वाणि भूतानि चराचरात्मकानि, विजानतः विशेषेण जानतः परिपक्वज्ञानवतः पुरुषस्य, आत्मा, एव, अभूत् संवृत्तः । यथा स्वप्नोत्थितस्य स्वप्नदृष्टानि सर्वाणि भूतान्यात्मैवाभूवन् "रूपं रूपं १ प्रतिरूपो वभूव" (a) इतिश्रुतेः; तथा मायारूपमहास्वप्नोत्थितस्यापि सृष्टिदृष्टानि सर्वाणि भूतान्यात्मैवाभवत् नात्मातिरिक्तानीत्यर्थः। श्रूयते च "इन्द्रो मायाभिः २ पुरुरूप ईयते" (b) इति ।

१ रूपं रूपमिति । श्रुतिरत्र वैपरीत्येऽपि युज्यत एव । एवम्
२ इन्द्रोमायाभिरित्यत्रापि ज्ञेयम् । अनयोरपि मन्त्रयोर्दधीचिरेव (c) ऋषिर्यस्येयमुपनिषद् ।

(a) वृहदारण्यकोपनिषद् २–५–१९; ऋग्वेद ६-४७-१८. (b) वृहदारण्यकोपनिषत् २–५–१९; ऋग्वेद ६-४७-१८. (c) इदं वै तन्मधु दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाचेति ऋषिर्वै दधीचिः वृहदारण्यके (२–५–१९), ऋषिस्तु गर्गं ऋग्वेदे (६–४७–१८).

तत्र तस्मिन्नेव काले ज्ञानपरिपाकदशायाम्, एकत्वमनुपश्यतः "तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथ अमृतस्यैष सेतुः" a इति श्रुत्या स्वप्नदृष्टान्तेन च एकस्यैवात्मनः सत्यत्वं तदतिरिक्तस्य मिथ्यात्वञ्चानुभवतः अत एव क्षीणवासनस्य, को मोहः कामक्रोधलोभादिकृतप्रमादः कः, कः शोकः वित्तपुत्रकलत्रादिनाशजनितो मनस्तापः कः; न कोपी ३ त्यर्थः। अन्यत्रापि श्रूयते "तरति शोकमात्मवित्" b "अध्यात्मयोगाधिगमेन धीरो हर्षशोकौ जहाति" c "एको वशी सर्व्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥" d इत्यादि। तथाच स्मर्यते "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" e इति। तथाच शोकमोहादिकं प्रपञ्चसत्यत्वदर्शनादज्ञानिन एव भवति; तदेव तमात्मघाते प्रवर्त्तयति। ज्ञानेन ४ तु प्रपञ्चे मिथ्याभूते सति शोकमोहादि-

३ न कोपीति। को मोहः कः शोक इति शोकमोहयोरज्ञानकार्य्ययोराक्षेपणासम्भवप्रदर्शनं ज्ञानिनि तत्कारणस्याज्ञानस्यात्यन्ताभावादित्यर्थः। एतेन ज्ञानिनि आत्मजिघांसाया अत्यन्ताभावः स्वाभाविक इति प्रदर्शितम्। शोकमोहेत्युपलक्षणं यावतां चित्तविकाराणाम्।

४ ज्ञानेन त्विति। प्रपञ्चः सत्य इति ध्यायतो हृदये वासना-

(a) मुण्डकोपनिषत् २-२-५. (b) छान्दोग्योपनिषत् ७-१-३. (c) कठोपनिषत् २-१२ (d) कठोपनिषत् ५-१२. (e) श्रीमद्भगवद्गीता १८-५४.

कमपि तथाभूतं सत् न शक्नुयाज्ज्ञानिनमात्मघाते प्रवर्तयितुम्। एवञ्च जीवात्मपरमात्मनोरभेददर्शनेन यस्य जुगुप्सा निवृत्ता तस्यैवेदानीं जीवात्ममिथ्यात्वदर्शनेन वासनाक्षये ५ सति शोकमोहादिकमपि निवृत्तम् इति सकारणजुगुप्साशोकमोहादिनिवृत्तौ तत्त्वज्ञानी सर्वथैवात्मघातोपरतो ६ भवतीति मन्त्रद्वयेन प्रतिपादितम्। ७।

---

जालमुपजायते, तेन रागद्वेषादिरभिजायते, ततः शोकमोहादिर्भवति। प्रपञ्चमिथ्यात्वज्ञानेन तु वासनाजालं स्वत एवोपशाम्यति, तथात्वे रागद्वेषादेस्तत्कृतशोकमोहादेश्चानुदयः सुतरां सिध्यति। श्रूयतेऽपि "कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः" a "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे॥" b "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥" c "तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" d इत्यादि। स्मर्यते च "कामा हृदय्या नश्यन्ति......मयि दृष्टेऽखिलात्मनि" e इत्यादि

५ वासनाक्षय इति। एतावता ज्ञानिनो व्यवहाराभावः प्रतिपाद्यत इति नाशङ्कनीयम्, भासमानेष्वपि पदार्थेषु ब्रह्मसत्यत्वजगन्मिथ्यात्वभावनया स शान्तचित्तः सदैकरसः सन् उदासीनवदास्तेऽत एव यदृच्छालाभे सन्तुष्टो यथाप्राप्तानां पदार्थानां रक्षणादिकं करोति, तेषां च वियोगे लाभे वा नेतरजन इव शोकमोहादिकमवाप्नोतीति।

६ आत्मघातोपरत इति—परघातकानामसुराणां निन्दादण्डादेः प्रसिद्धत्वात् परघातविषयोऽत्र नैवोक्तः, आत्मघातविषयस्तु अप्रसिद्धत्वात् सविशेषं विशदीकृतः। ७।

---

( a ) मुण्डकोपनिषत् ३-२-२. ( b ) मुण्डकोपनिषत् २-२-८. ( c ) कठोपनिषत् ६-१४. (d) मुण्डकोपनिषत् ३-२-९. (e) श्रीमद्भागवत ११-२०-२९; ३०.

# अथाष्टमो मन्त्रः ।



अतीतमन्त्रोक्तः शोकमोहाद्यतीतस्तत्त्वज्ञानिपुरुषो ब्रह्मनिष्ठः सन् जीवन्मुक्तो भवतीत्याह—

स पर्य्यगाच्छुक्रमकायमव्रण-
मस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतो-
ऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ।८।

ऋष्यादयः—ॐ स पर्य्यगादित्यस्य मन्त्रस्य दधीच ऋषिर्विराडतिजगती छन्दो जीवन्मुक्तो देवता लोकसंग्रहे विनियोगः ।

अन्वयप्रदर्शनम्—कविः मनीषी परिभूः स्वयम्भूः स अकायम् अव्रणम् अस्नाविरम् शुद्धम् अपापविद्धम् शुक्रम् परिअगात् (सः) शाश्वतीभ्यः समाभ्यः अर्थान् याथातथ्यतः व्यदधात् ।

स यथोक्त आत्मतत्त्वज्ञः, शुक्रम् ब्रह्म; जगतो बीजभूतं तेजोरूपं १ यत् सृष्टिशक्तिसम्पन्नं तत् ". तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते " a इत्यादि श्रुतेः । " शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च " b इत्यमरः । परि

---

१ तेजोरूपमिति । एतच्च वक्ष्यमाणे षोडशमन्त्रे स्फुटीभविष्यति ।

---

(a) कठोपनिषद् ६–१. (b) नामलिङ्गानुशासन २–६–२–११.

परितः सर्वतः सर्वदेशे सर्वकाले च, अगात् प्राप्तवान् ज्ञातवान्; अधिगच्छतीत्यर्थः। यत्र कुत्र २ तिष्ठति तत्रैव ब्रह्मतत्त्वं जानाति "आत्मानं सततं जानन् कालं नय महाद्युते" a इति श्रुत्यनुसारादितिभावः।

अथ नैतच्छुक्रं पुत्रोत्पादनपरायणेतरजनसेवितरेतोरूपं किन्तु तद्विलक्षणम्—ब्रह्मरूपम्—इत्यभिप्रेत्य शुक्रं विशिनष्टि ३ अकायमित्यादिना। अकायम् कायवर्जितं शरीरसम्बन्धलेशशून्यम्; न त्वितरशुक्रवत् कायिकम्। तथा अव्रणम् व्रणवर्जितं क्षतोपदंशादिसम्बन्धलेशशून्यम्; न त्वितरशुक्रवद् व्रणसम्बन्धोपेतम्। तथा अस्नाविरम् स्नायु-

२ यत्रकुत्रेत्यादि। ज्ञानिनश्चित्ते ब्रह्मतत्त्वं सदैव स्वतः स्फुरति। एतेन ज्ञानिनश्चित्तं व्याधिशून्यमित्युक्तम्, 'चित्तस्य स्वास्थ्यं यत् स्वतस्तस्मिन् वेदवाक्यार्थस्फुरणम्, चित्तस्य व्याधिर्यदितोऽन्यथा' इत्याप्तवाक्यात् "स्वयमेवात्मनि स्वस्थः" b इति श्रुतिप्रमाणाच्च। तथाच स्वाध्यायं कुर्वतश्चित्तस्वास्थ्यं स्वयमुपजायते, स्वाध्यायः कर्त्तव्येषु सर्व प्रथमं विधीयते c। तदुक्तं शङ्करभगवत्पादेनापि "वेदो नित्यमधीयताम्" "वेदान्तवाक्येषु सदा रमन्तः कौपीनवन्तः खलु भाग्यवन्तः" इत्यादि।

३ शुक्रं विशिनष्टीति। सर्वेऽपि जनाः शुक्रव्यापारे रतास्तत्र ज्ञानी जगद्बीजभूते शुक्रे रतोऽपरे तु सन्तानबीजभूते शुक्रे रता इतीतरविशेषत्वद्योतनाय शुक्रविशेषणानि।

(a) नादबिन्दूपनिषद् २१. (b) तेजोबिन्दूपनिषत् ३-२२. (c) मनुसंहिता २-१६६, महाभारत शान्तिपर्व ३२७-४९.

संवन्धलेशशून्यम्; न त्वितरशुक्रवत् स्नायुसम्बन्धोपेतम् ४ । तथा शुद्धम् पवित्रं घृणाऽनर्हम्; न त्वितरशुक्रवद् घृणाऽर्हम् । तथा अपापविद्धम् पापवेधवर्जितं पापतत्फलसंबन्धलेशशून्यम्; न त्वितरशुक्रवज्जारादिरूपदुरपनेयपापसंबन्धोपेतम् ।

एवं विधविशेषणोपेतं शुक्राख्यं ब्रह्म यः पर्य्यगात् स जीवन्मुक्तो भवतीत्युच्यते—कविर्मनीषी परिभूः स्वयम्भूरिति । कविः क्रान्त (अतीत) दर्शी, मनीषी अलौकिकी मनीषा (बुद्धिः) अस्त्यस्येति मनीषी धीमान् । प्रसंशायां मत्वर्थीयं इनिः प्रत्ययः । कविर्मनीषीति पदद्वयेन ब्रह्मज्ञानिनो जातिस्मरत्वं ५ सूचितं तस्यातीतदर्शनेऽलौकिकधीशक्तिसम्पन्नत्वेन यां मूलवासनामाश्रित्य जीवभावमापन्नस्तस्याः स्मृतिलम्भात् । मूलकारणस्य (ब्रह्मणः) निरन्तरचिन्तायाः स्वाभाविकं फलमेतत् । तथाच श्रुतिः " कामस्तदग्रे समवर्त्तताधिमनसो रेतः प्रथमं यदासीत् । सतोबन्धुम् ६ असति

४ स्नायुसम्बन्धेत्यादि । स्नायूपादानकम् । तेन शुक्रव्यये स्नायुदौर्बल्यं जायते, इत्यकायमित्युक्त्वापि अस्नाविरमित्युक्तम् ।

५ जातिस्मरत्वमिति । जीवन्मुक्तेन जातिस्मरत्वादिसिद्धिसम्पन्नेन भाव्यम् " परीक्षकैः स्वर्णकारैर्हेम सम्प्रोच्यते यथा । सिद्धिभिर्लक्षयेत् सिद्धं जीवन्मुक्तं तथैव च ॥ " a इति श्रुतेः । ताश्च सिद्धयो ज्ञानपरिपाके सति विनापि साधनान्तरं स्वत एवाविर्भवन्ति ।

६ सतोबन्धुमिति । सतो ब्रह्मणोऽसति मायायां विषये, बन्धुम् बन्धनं जीवभावप्राप्तिकारणम्, कवयो ज्ञानिनः, मनीषा मनीषया

(a) योगशिखोपनिषत् २-१५९.

निरविन्दन् हृदि प्रतिष्या कवयो मनीषा॥" a इति। अत एव परिभूः परिभवति तिरस्करोति वासनाजालमिति परिभूः "अनादरः परिभवः परिभावस्तिरस्क्रिया" b इत्यमरः। वासनाबद्धजीवभावमतिक्रम्य वर्तमानो जीवन्मुक्त इत्यर्थः। तथाच श्रूयते "बन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः" c "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" d इति। अत एव स्वयम्भूः स्वयम् स्वयंरूपः केवलात्मरूपः—ब्रह्मैवेत्यर्थः—भवतीति स्वयम्भूः स्वरूपावस्थितो ब्रह्मभावापन्नः "स यो ह वा एतत् परमं ब्रह्म वेद ब्रह्मैव भवति" e "यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् देहे गहने प्रविष्टः। स सर्वज्ञः स हि सर्वस्य कर्ता" f "स्वयं केवलरूपतः। य आस्ते ब्रह्म न ब्रह्मवित् स्वयम्॥" g इत्यादिश्रुतेः।

किञ्च तस्य ब्रह्मभावानन्तरमाचार्यत्वमपि स्वतः सिद्धमित्याह—याथातथ्यतोऽर्थान् व्यदधादिति। अथ स जीवन्मुक्तो याथातथ्यतः यथातथाभावेन तत्त्वत इत्येतत्, अर्थान् शास्त्रार्थान् श्रुतिविषयान् स्मृतिविषयांश्च व्यदधात् विहितवान्; उपदेशाचरणाभ्यां ७ विदधातीत्यर्थः। एतेन

बुद्ध्या, प्रतीष्य अन्विष्य, हृदि स्वहृदये, निरविन्दन् निःसंशयमलभन्त। काचिद्वासनैव सा।

७ उपदेशाचरणाभ्यामिति। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्त-

(a) ऋग्वेदसंहिता १०—१२९—४. (b) नामलिङ्गानुशासन १—१—७—२२. (c) मुक्तिकोपनिषत् २—६८. (d) छान्दोग्योपनिषत् ७—२६—२. (e) मुण्डकोपनिषत् ३—२—९ (f) बृहदारण्यकोपनिषत् ४—४—१३. (g) मुक्तिकोपनिषत् २—६४.

तस्याचार्यत्वं ८ प्रतिपादितम् । श्रूयते च " तस्मै स विद्वानुपसन्नाय·········सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् " a

---

त्त्वदर्शिनः " b " यद् यदाचरति श्रेष्ठस्तत् तदेवेतरो जनः " c इति स्मृतिभ्याम् । अत्र प्रसङ्गक्रमेण भगवदुक्तिः स्मर्यते " यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहम् । सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥ " d इति । एतेन पुराणोक्तो भगवता कृष्णेनाचरितः परनारीरङ्गोऽन्यथैवरूपकच्छलेनोपन्यस्त इति प्रतिभाति ।

८ आचार्य्यत्वमिति । " नावेदविन्मनुते तं बृहन्तम् " e. " तं त्वौपनिषदं पुरुषं पृच्छामि" f इत्यादिश्रुतेस्तत्त्वज्ञानन्तु वेदवाक्यादेव भवति । वेदवाक्यञ्चाचार्यमुखाच्छ्रुतमेव फलति " भद्रैषां लक्ष्मीर्निहिताऽधिवाचि" g " आचार्य्यमुखेन यो जानीते स तेनैव शरीरेण संसारान्मुच्यते " h "·········दैशिकस्य मुखात् स्वयं गृहीत्वा······जीवन्मुक्ता भवन्ति " i " चतुर्जालं ब्रह्मकोशं प्रणुदेद् गुर्वागमेन" j " आचार्यवान् पुरुषो वेद " k " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " l " तद्दर्शनं सदाचार्यमूलम्" m " आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयति n " " यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते

---

(a) मुण्डकोपनिषत् १-२-१३. (b) श्रीमद्भगवद्गीता ४-३४. (c) श्रीमद्भगवद्गीता ३-२१ (d) श्रीमद्भगवद्गीता ३-२३,२४. (e) तैत्तिरीयब्राह्मण ३-१२-९-७. (f) बृहदारण्यकोपनिषद् ३-९-२६. (g) ऋग्वेदसंहिता १०-७१-२. (h) नृसिंहपूर्वतापिनी १-५. (i) मुक्तिकोपनिषत् १-४२. (j) मैत्रायणीयोपनिषद् ६-२८. (k) छान्दोग्योपनिषद् ६-१४-२. (l) मुण्डकोपनिषत् १-२-१२. (m) अद्वयतारकोपनिषत्. (n) छान्दोग्योपनिषत् ४-९-३.

इति । स्मर्य्यतेऽपि " आचिनोति शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमप्याचरेद् यस्तु स आचार्य्य इति स्मृतः ॥ " a इति । एवं तत्त्वतोऽर्थविधानफलमाह–शाश्वतीभ्यः ९ समाभ्यः अनन्तेभ्यः संवत्सरेभ्यः; चिरकालायेति यावत् । लोकसंग्रहार्थं सनातनधर्मरूपस्य वेदमार्गस्याविच्छिन्नप्रवाहायेति भावः ।

---

कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ " b " नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ । " c " गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतो मुखम् " d इत्यादिबहुश्रुतिप्रामाण्याच्च । अतः श्रुतिराचार्यस्यावश्यकत्वं प्राह । अन्यत्राप्युक्तम् " वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति " e " आचार्यस्तु ते गतिं वक्ता " f " उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत " g " आचार्याधीनो भव " h " आचार्य्याधीनो वेदमधीष्व " i " श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः " j " तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया " k " भगवाञ्ज्ञायते शास्त्राच्छास्त्रं च ज्ञायते गुरोः " l इत्यादि ।

९ शाश्वतीभ्य इति । एतेन वेदमार्गस्य सत्यमूलकत्वमविनाशित्वञ्च सूचितम् ।

---

(a) व्यासोक्ति, विष्णुपुराण. (b) श्वेताश्वतरोपनिषत् ६–२३. (c) कठोपनिषत् २–९ (d) कृष्णयजुर्वेदीयब्रह्मविद्योपनिषत् २६–३४. (e) तैत्तिरीयारण्यक ७–११–१; तैत्तिरीयोपनिषत् १–११–१. (f) छान्दोग्योपनिषत् ४–१४–१. (g) कठोपनिषत् ३–१४. (h) मन्त्रपाठब्राह्मण २–६–१४; गोभिलगृह्यसूत्र ३–१–१५. (i) आश्वलायनगृह्यसूत्र १–२२–२. (j) श्रीमद्भगवद्गीता ४–३९. (k) श्रीमद्भगवद्गीता ४–३४. (l) स्पन्दप्रदीपिका, उत्पलाचार्य ( ‡ ५२ ).

जीवन्मुक्तस्याचार्य्यकर्म्मप्रवृत्तिस्तु प्रारब्धवशादयत्नसिद्धैव १०
न फलोद्दिष्टा; लोकसंग्रहात्मकं फलं चानुसङ्गिकमिति वेदितव्यम् ।

मन्त्रस्यास्यैतादृशं व्याख्यानम् आचार्याभिमतं तत्कृत-ग्रन्थान्तरे a । ८ ।

---

१० अयत्नसिद्धेति । " विद्या ह वै ब्राह्मणमाजगाम गोपाय मा......। यस्ते न द्रुह्येत्...... तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति ॥ " b इति श्रुतेर्ब्रह्मनिष्ठस्याचार्यत्वं स्वयं ब्रह्मणैव कृतम् । जीवन्मुक्तस्य धर्म्माधर्मादौ समदर्शित्वेऽपि आचार्यधर्मानुकूलगुणा अलङ्कारवदनुवर्त्तन्ते । तदुक्तम् " तदानीं......सद्गुणाश्चालङ्कारवदनुवर्तन्ते " c "......गुणाः । अयत्नतो भवन्त्यस्य.........॥" d इत्यादि । ८ ।



---

( a ) वेदान्तकेसरी ( शतश्लोकी ) ४४. (b) छन्दोगसंहितोपनिषद्ब्राह्मण ३.
(c) सदानन्दकृतवेदान्तसार ‡ ३७. (d) नैष्कर्म्यसिद्धि, सुरेश्वराचार्य ४–६९.

# अथ नवमो मन्त्रः ।

एवं जीवन्मुक्तिप्रस्तावं समाप्येदानीम् अन्धं तम इत्यादिना सोहमस्मीत्यन्तेन च सन्दर्भेण अमृतलाभं प्रस्तावयति । स ( अमृतलाभः ). तावत् कर्मसहितज्ञानेनैव भवतीति प्रथमं ज्ञानकर्मणी १ समुच्चिनोति—अन्धं तम इत्यादिमन्त्रत्रयेण—

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायां रताः ।९।**

ऋष्यादयः—ओमन्धं तम इत्यस्य मन्त्रस्य दधीच ऋषिर्निच्यृदार्ष्यनुष्टुप् छन्दो जिज्ञासुर्देवता उपदेशे विनियोगः ।

अन्धम् अदर्शनात्मकम् विचाररहितमित्यर्थः, तमः अज्ञानं भ्रान्तिमिति यावत्, प्रविशन्ति । भ्रान्ता भवन्तिः नं याथातथ्यतोऽर्थान् विदधतीतिभावः। के? ये अविद्याम् विद्यायां ज्ञानादन्या अविद्या ताम् ; कर्मेत्यर्थः। अविद्यापदेनात्र कर्मैव ग्राह्यम् " दूरमेते विपरीते २ विषूची अविद्या या च विद्येति ज्ञाता " (a) "अविद्या-

१ ज्ञानकर्मणी इति । जीवन्मुक्तस्यापि प्रारब्धवशात् कर्मसद्भावे कर्मैव सर्वेषामुपास्यमिति केचिदाहुरन्ये पुनर्जीवन्मुक्तेः कारणभूतत्वात् केवलं ज्ञानमिति । एवं प्राप्ते ज्ञानकर्मणी समुच्चिनोतीत्यर्थः ।

२ विपरीते इति । विद्या नाम ज्ञानं तच्च सर्वव्यापकत्वेन

(a) कठोपनिषत् २–४.

यामन्तरे वर्तमानाः " a इत्यादिश्रुतावपि तस्य ( अविद्यापदस्य ) कर्म्मण्येव तात्पर्य्यात् । उपासते केवलमग्निहोत्रादिकमनुतिष्ठन्ति न तु ज्ञानम् । ततः तस्माद् अन्धात्मकात् तमसः, भूयः इव बहुतरामिव ( इवेत्युत्प्रेक्षायाम् ), तमः अज्ञानरूपां भ्रान्तिं, ते प्रविशन्ति । के पुनस्ते ? ये उ ये तु, विद्यायाम् कर्म हित्वा केवले ज्ञाने, रताः तत्पराः ।

मन्त्रोऽयं बृहदारण्यकोपनिषदि b माध्यन्दिनशाखागतशतपथब्राह्मणे c चापि पठितः । ९ ।

---

निःस्पन्दम्, अविद्या नाम कर्म तच्च परिच्छिन्नत्वेन स्पन्दात्मकम् इत्येवं विद्याऽविद्ययोर्विपरीतत्वम् । चिन्ताशीलस्य कर्म शिथिलं कर्मवीरस्य च चिन्ता शिथिला-इत्यपि विपरीतत्वम् । तथा " अविद्या प्रेयोविषया विद्या श्रेयोविषया " d इति शङ्करभगवत्पादवचनमपि विद्याविद्ययोर्विपरीतभावं द्रढयति । नैतावता साहचर्य्यं निवार्यते जीवन्मुक्तस्यापि ज्ञानिनः ( गजभुक्तकपित्थादिवद्बाधितानुवृत्तिरूपेणापि ) प्रारब्धकर्मसद्भावात् । प्रारब्धञ्च यथा यथा भोगेन क्षयमुपगच्छति तथा तथा ज्ञानं वर्द्धयति । अथ कर्मणि समूले क्षयमुपगते ज्ञानादेव ह्यमृतसिद्धिः । इत्येवं ज्ञानकर्म्मणोः साहचर्य्यसम्भवे नास्ति विरोधापत्तिः । ९ ।



---

(a) कठोपनिषद् २–५; मुण्डकोपनिषत् १–२–८. (b) बृहदारण्यकोपनिषद् ४–४–१३. (c) शतपथब्राह्मण १४–७–२–१३. (d) कठोपनिषद्भाष्य २–४.

# अथ दशमो मन्त्रः ।

**अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे।१०।**

ऋष्यादयः—ओमन्यदेवेत्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्दः श्रोता देवता मनने विनियोगः ।

अन्यत् १ पृथग् एव कर्मफलादित्यर्थः, विद्यया ज्ञानेन फलं लभ्यते; केवलविद्यया लक्ष्याद् भ्रश्यत इत्यर्थः। इति एवम्, आहुः वदन्ति; आप्तपुरुषा इति शेषः । अन्यत् २ ज्ञानफलात् पृथगेव फलम्, अविद्यया कर्म्मणा लभ्यते, इत्याहुः । इति एवम्, शुश्रुम श्रुतवन्तः (वयम्) धीराणाम् धीमतामाप्तानाम् ; वंचनमिति-शेषः । ये आप्ताः पूर्व्वाचार्य्याः, नः अस्मभ्यम्, तत् पूर्व्वोक्तं तत्त्वं ज्ञानकर्म्मणोः पृथक्फलत्वम्, विचचक्षिरे व्याख्यातवन्तः; लोकानां हितकाम्यया प्रोक्तवन्तः। तेषामयमागमः पारम्पर्य्यागत इत्यर्थः । १० ।

---

१,२ अन्यदिति । पृथगाचरितयोर्ज्ञानकर्मणोः फले परस्परं भिन्ने इत्यत्रैव न श्रुतेस्तात्पर्य्यं किन्तु ( पूर्वोक्तान्धतमःप्रवेशरूपभ्रमात्मकत्वेन ) प्रस्तुतायाममृतसिद्धावनुपकारित्वेन चातितुच्छे इत्यत्रापि । अतस्ते अन्यदिति सामान्यतो निर्द्देशेनैवोपेक्षिते न तु विशिष्य नामतो निर्द्दिष्टे । न केवलं ज्ञानेन न चापि केवलं कर्मणा अमृतलाभ इति भावः । १० ।

# अथैकादशो मन्त्रः ।

**विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते । ११ ।**

ऋष्यादयः—ॐ विद्यामित्यस्य मन्त्रस्य दधीच ऋषिरार्ची-पङ्क्तिश्छन्दोऽधिकारी देवता अनुष्ठाने विनियोगः ।

" तं विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा च " a इत्यादि श्रुतेः पुरुषस्य जन्म प्रारभ्यत एव ज्ञानकर्मणोः समन्वयघटितमित्यवगम्यते । यत एवमतः—विद्याम् ज्ञानम्, च, अविद्याम् कर्म्म, च, यः, तत् एतत्, उभयम्, सह एकेन पुरुषेणानुष्ठेयम्, वेद जानाति; जानन्नुभयमेवानुतिष्ठतीत्यभिप्रायः । सः अविद्यया कर्मणा ' अग्निहोत्रादिना ' इति शङ्करभगवत्पादाचार्याः, मृत्युम् १ मरणम्, " मृत्योः स मृत्युमाप्नोति " b इतिश्रुत्युक्तं पुनःपुनर्मरणात्मकं संसारम् मर्त्यलोकमिति यावत्, तीर्त्वा अतिक्रम्य, विद्यया ज्ञानेन, अमृतम् अमृतत्वम्, अश्नुते भुङ्क्ते, स्वर्गे लोके इतिशेषः "स्वर्गलोका अमृतत्वं भजन्ते" c " आप्नो-

१ मृत्युमिति । स्वाभाविकं मरणभयमिति वार्थः । तच्च वासनाजन्यम् । कर्मणा वासनाक्षये सति हृदयदौर्बल्यरूपं भयं तीर्त्वा मुमुक्षुरात्मबली सन्नात्मलाभे योग्यतां गच्छति । एतस्मिन्नर्थे " नायमात्मा बलहीनेन लभ्यः " d " आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम् " e इत्यादिश्रुतयोऽनुसन्धेयाः । ११ ।

(a) बृहदारण्यकोपनिषत् ४-४-२. (b) कठोपनिषत् ४-१०. (c) कठोपनिषत् १-१३. (d) मुण्डकोपनिषत् ३-२-४. (e) केनोपनिषत् १२.

त्यमृतत्वमक्षितिं स्वर्गे लोके " a " यत्र देवा अमृतमानशाना-स्तृतीये धामनि " b " यत्र ज्योतिरजस्रं यस्मिँ-ल्लोके स्वर्हितम् । तस्मिन् मां धेहि पवमानामृते लोकेऽक्षिते " c " तत्र माममृतं कृधि d " इत्यादिश्रुतेः । केवलेन कर्मणा ( अग्निहोत्रादिना ) मर्त्यलोकं तीर्त्वा स्वर्गं गच्छति; गत्वा च पुनरेव पतति; नतु तत्रामृतत्वं भोक्तुं शक्नोति । यदा त्वे कर्म ज्ञानसहचारितं भवति तदा कर्मणा मर्त्यलोकं तीर्त्वा ज्ञानेन स्वर्गलोकेऽमृतं भुङ्क्ते न पुनः पतति तत्रैव तिष्ठति इत्येतत् ' तीर्त्वा ' इत्यसमापिकया क्रियया द्योतितम् ।

इत्थममृतलाभे ज्ञानकर्मणोः साहचर्य्यं प्रदर्शितम् । तथाच श्रुत्यन्तरे निर्वचनानि " विद्या च मेऽविद्या च मे तन्म उभयं व्रतम् " e " य एतदेवं विद्वान् अग्निहोत्रं जुहोति " f " यद-ह्नेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् " g " यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति " h इति । स्मर्यते च " तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥" i इति । तथा चान्तिमोपदेशे शङ्करभगवत्पादाचार्याः " वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम् j " इति ।

मन्त्रोऽयं मैत्रायणीयोपनिषद्यपि पठितः k । ११ ।

---

(a) कौषीतकिब्राह्मणोपनिषत् ३–२. (b) महानारायणोपनिषत् ४. (c) ऋग्वेदसंहिता ९–११३–७. (d) ऋग्वेदसंहिता ९–११३–८. (e) मन्त्रपाठब्राह्मण २–५–४. (f) छान्दोग्योपनिषत् ५–५–२. (g) बृहदारण्यकोपनिषत् १–५–२. (h) छान्दोग्योपनिषत् १–१–१०. (i) मानवधर्मशास्त्र (मनुसंहिता) १२–१०४. (j) साधनपञ्चकस्तोत्र १. (k) मैत्रायणीयोपनिषत् ७–८.

# अथ द्वादशो मन्त्रः ।



कर्मसहचरितज्ञानेनामृतं लभ्यत इत्युक्तम्; तत्र कीदृशं १ तज्ज्ञानमिति जिज्ञासायामाह—अन्धं तम इत्यादिना मन्त्रत्रयेण—

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते**
**ततो भूय इव ते तमो य उ सम्भूत्यां रताः । १२ ।**

ऋष्यादयः—ॐ अन्धं तम इत्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्दो जिज्ञासुर्देवता उपदेशे विनियोगः ।

अन्धं तमः प्रविशन्ति पूर्ववद्भ्रान्तिमापद्यन्ते, ये, असम्भूतिं २ विनाशम्, उपासते अनुतिष्ठन्ति सदा ध्यायन्तीत्यर्थः । सर्वं वस्तुजातं विनाशीति मन्यन्ते; सर्वस्मिन्नपि वस्तुनि

---

१ कीदृशमिति । न हि कर्मसहितमपि ज्ञानमात्रम् अमृतप्रदं किन्तु ज्ञानविषये प्रकारान्तरमस्ति, तदाह कीदृशमिति । "तमेव विदित्वा प्रज्ञां कुर्व्वीत ब्राह्मणः" a इति श्रुतेर्ज्ञानोदयानन्तरमपि अमृतलाभार्थं प्रज्ञाविशेषोऽवलम्बनीय इति प्रतीयते । स च विजातीयज्ञानतिरस्कारपूर्वकं निरन्तरं नित्यानित्यज्ञानप्रवाहे चित्तवृत्तिसमाधानरूपः ।

२ असम्भूतिमिति । सम्यग् भवनं सम्भूतिः, सत्यत्वं नित्यत्वं पारमार्थिकत्वमविनाशित्वमिति यावत् । तद्विपरीता असंभूतिः, मिथ्यात्वमनित्यत्वं मायिकत्वं विनाशित्वमिति यावत् । ताम् ।१२।

---

( a ) बृहदारण्यकोपनिषत् ४-४-२१.

विनाशित्वमेवानुपश्यन्ति न कुत्रचिदप्यविनाशित्वम् । अत्रा- संभूतिपदेन विनाश एव धर्त्तुं न्याय्यः 'सम्भूतिश्च विनाशश्च' इत्युत्तरत्रासम्भूतिपदस्थाने विनाशपदप्रयोगात्; ततश्च तद्वि- परीतत्वेन सम्भूतिपदस्यापि अविनाश इत्येवार्थः । ततो भूय इव तमः तस्मादप्यधिकमिव भ्रमम्, प्रविशन्ति, ये उ ये तु, सम्भूत्याम् अविनाशे, रताः आसक्ताः । सर्वं वस्तुजातमवि- नाशीत्येव मन्यन्ते; न क्वापि विनाशित्वमनुपश्यन्ति । एतेन— सर्वविनाशित्वदर्शनशीलाः शून्यवादिनः सर्वाऽविनाशित्वदर्शन- शीला द्वैतवादिनश्च भ्रान्ताः; ततस्ते उभयेऽमृतलाभे नालम्— इत्युक्तं भवति । १२ ।



# अथ त्रयोदशो मन्त्रः ।

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ।१३।

ऋष्यादयः—ॐ अन्यदित्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्दः श्रोता देवता मनने विनियोगः ।

अन्यत् १ एव पूर्ववत् पृथगेव, आहुः; फलमितिशेषः । सम्भवात् सम्भूतेः सर्वस्मिन्नपि केवलमविनाशित्वदर्शनात् । तथा अन्यत् २ पृथक् फलमाहुः; आप्तपुरुषा इति शेषः । असंम्भवात् असंभूतेः सर्वस्मिन्नपि केवलं विनाशित्वदर्शनात् । इति एवम्, शुश्रुम (वयम्), धीराणाम् आप्तानाम्; वचनमितिशेषः । ये आप्ताः, नः अस्मभ्यम्, तत् संभूत्यसंभूत्योः पृथक्फलत्वम्, विचचक्षिरे लोकानां हितकाम्यया प्रोक्तवन्तः । आचार्यपरम्परागतमिदं तत्त्वमित्यर्थः । १३ ।

१, २ अन्यदिति । सम्भूत्यसंभूत्योः पृथगाचरितयोः फले पूर्ववद् भ्रान्तिमूलकत्वादनुपादेयत्वाच्च तुच्छत्वेन अन्यदिति सामान्यतो निर्दिष्टे । न केवलं सर्वविनाशित्वदर्शनेन न चापि केवलं सर्वाऽविनाशित्वदर्शनेनामृतलाभ इति भावः । १३ ।



# अथ चतुर्दशो मन्त्रः।



सम्भूतिञ्चविनाशं च यस्तद्वेदोभयं सह।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ।१४।

ऋष्यादयः—ॐ सम्भूतिमित्यस्य मन्त्रस्य दधीच ऋषिरार्ष्यनुष्टुप् छन्दोऽधिकारी देवताऽनुष्ठाने विनियोगः।

"सत्यानृते मिथुनीकरोति" a इत्यादिश्रुतेर्जगतः सृष्टिरनादित एव सत्यमिथ्यात्वयुक्तेत्यवगम्यते। यत एवमतः सम्भूतिं च विनाशं च नित्यत्वमनित्यत्वं च; सत्यत्वमिथ्यात्वकोटिद्वयमिति यावत्। यः, तत् एतद्, उभयम्, सह एकेन पुरुषेणानुष्ठेयं निदिध्यासितव्यं विचार्य्यमित्यर्थः। वेद जानाति जानन्नुभयमेवानुतिष्ठति; वस्तुनो नित्यानित्यत्वं विवेचयतीत्यभिप्रायः। स विनाशेन असंभूत्या सर्वत्रानित्यत्वदर्शनेन; सर्वत्र सत्यत्वदर्शनसहचरितमिथ्यात्वविवेचनेनेत्यर्थः। मृत्युम् मरणम्; संसारमित्यर्थः; तीर्त्वा अतिक्रम्य। वस्तुतस्तु संसारतरणं वासनाक्षयेण भवति; स च १ सर्वत्रानित्यत्वदर्शनजनितत्यागेनेत्य-

१ स चेति। वासनाक्षयो द्विधा भवति, भोगकृतस्त्यागकृतश्च। तत्र भोगकृतः क्षयः कर्मणा भवति त्यागकृतश्चानित्यत्वदर्शनेन—इति 'अविद्यया मृत्युं तीर्त्वा' 'विनाशेन मृत्युं तीर्त्वा' इत्यनयोरेकत्र तात्पर्य्यम्। ईशावास्यमित्यत्र यत् स्वेच्छावर्ज्जनपूर्व्वक-

(a) अपरोक्षानुभूतिव्याख्यायां ९४ विद्यारण्यस्वामिभिः श्रुतिरित्युल्लिखितम्

भिप्रायः। अत्र तीर्त्वेत्यसमापिका क्रिया पूर्ववद् योज्या। सम्भूत्या अविनाशेन सर्वत्र नित्यत्वदर्शनेन; सत्यंवस्तुनः सर्वदा सर्वत्र सम्यगुपलब्धिद्वारेत्यर्थः। अमृतम् स्वर्गलोकम्, अश्नुते भुङ्क्ते। अस्य भावार्थः पूर्वं व्याख्यातः। इत्थममृतलाभे यज्ज्ञानकर्मणोः साहचर्य्यं प्रदर्शितम्; तत्र ज्ञानेन न ज्ञानमात्रं किन्तु नित्यानित्यवस्तुविचाररूपो ज्ञानप्रकार एवाभिप्रेतः।

अत्रेदमवधार्य्यम्—केचिच्छून्यवादिनो वस्तुजातं दृष्टिसृष्टत्वेन २ मिथ्येति मन्यमानाः सर्वत्रानित्यत्वदर्शनमेव प्रकृतज्ञानयोग इत्याहुः; तथाऽपरे द्वैतवादिनो वस्तुजातं सृष्टिदृष्टत्वेन ३सत्यमिति मन्यमानाः सर्वत्र नित्यत्वदर्शनमेव प्रकृतज्ञानयोग इत्याहुः। तत्रोच्यते न केवलमनित्यत्वदर्शनं नित्यत्वदर्शनं वा प्रकृतज्ञानयोगः; किन्तु उभयोः साहचर्य्यमेव—इति मन्त्रषट्कात्मकसन्दर्भस्य तात्पर्य्यार्थः। तथाच श्रूयते सत्यञ्च मेऽनृतञ्च मे तन्म उभयं व्रतम्" a "सत्यञ्चानृतञ्च सत्यमभवत्" b "दृष्ट्वारूपे व्याकरोत् सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधाच्छ्रद्धां

---

सर्व्वत्रेश्वरेच्छादर्शनमुक्तं तदपि सर्वत्रानित्यत्वदर्शनजन्यवासनाक्षयेणैव संभवति।

२ दृष्टिसृष्टत्वेनेति। दर्शनमेव सृष्टिः, न दर्शनातिरिक्ता; स्वप्नवत्। मिथ्येत्यर्थः।

३ सृष्टिदृष्टत्वेनेति। यथा सृष्टं तथैव दृश्यते, न तदन्यथा। सत्यमित्यर्थः। १४।

---

(a) मन्त्रपाठब्राह्मण २–५–६. (b) तैत्तिरीयारण्यक ८–६; तैत्तिरीयोपनिषत् २–६.

सत्ये प्रजापतिः ॥” a द्वावेव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च । अथ यन्मूर्त्तं तदसत्यं यदमूर्त्तं तत् सत्यम् ॥” b “द्वावेव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्त्यञ्चामृतञ्च” c “संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः” d “अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्” e “विनश्यत्सु यन्न विनश्यति” f इत्यादि । स्मर्य्यते च “यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति” g “विनश्यत्स्वविनश्यन्तम्” h इत्यादि ।

अत्रामृतसिद्धिप्रस्तावे प्रथमं कर्म्मज्ञानयोः साहचर्य्यमुक्तम्; ततो ज्ञानस्य प्रकारः प्रदर्शितो न कर्म्मणः; तस्य स्मृतौ बाहुल्येन प्रदर्शितत्वाद् वक्ष्यमाणेऽष्टादशे मन्त्रे यज्ञप्रस्तावे स्फुटीकरिष्यमाणत्वाच्च । उक्तञ्च भगवता “यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥” i. इति । यज्ञेन देवतादर्शनम्, दानेन वित्तसञ्चयस्पृहाशून्यता, तपसा पुत्रोत्पादनेच्छात्याग इति त्रयेण मर्त्यलोकादुच्चारोहणम्—इत्येवं कर्मणा ( अविद्यया ) मृत्युं तीर्त्वा ज्ञानेनामृतमश्नुते इति सर्वमवदातम् । १४ ।



(a) शुक्लयजुर्वेदसंहिता १९–७७; कठसंहिता चरकशाखा ३८–१; मैत्रायणीयसंहिता ३–११–६; तैत्तिरीयब्राह्मण २–६–२–३. (b) मैत्रायणीयोपनिषत् ६–३. (c) बृहदारण्यकोपनिषत् २–३–१. (d) श्वेताश्वतरोपनिषत् १–८. (e) कठोपनिषत् २–२१. (f) सर्वसारोपनिषत् १. (g) श्रीमद्भगवद्गीता ८–२०. (h) श्रीमद्भगवद्गीता १३–२७. (i) श्रीमद्भगवद्गीता १८–५.

# अथ पञ्चदशो मन्त्रः ।



अत्रामृतलाभप्रस्तावे प्रथमं कर्म्मज्ञानयोरेकपुरुषेणानुष्ठेयत्वमुक्तम् । तत्र पुनः कीदृशं तज्ज्ञानमित्याक्षिप्य; एकत्रैव नित्यानित्यत्वविचारात्मको ज्ञानप्रकारोऽपि दर्शितः । अथेदानीं तमेव प्रकारं सूर्य्यदृष्टान्तेन दृढयति—

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्म्माय दृष्टये । १५ ।**

ऋष्यादयः—ॐ हिरण्मयेनेत्यस्यं मन्त्रस्य दधीच ऋषिरनुष्टुप् छन्दः सूर्य्यो देवता दृष्टान्ते विनियोगः ।

हिरण्यस्य सुवर्णस्य विकारो हिरण्मयम् तेन ( तेनेव ) ज्योतिर्मयेणत्यर्थः । पात्रेण शरावसदृशेनापिधानभूतेन; मूर्तेन मिथ्याभूतेन मण्डलात्मकेनेत्यर्थः । सत्यस्य अमूर्त्तस्यादित्यमण्डलावस्थितस्य ब्रह्मणः "तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति"[a] "तद् यत् सत्यमसौ स आदित्यो य एष एतास्मिन् मण्डले पुरुषः"[b] "अथ यन्मूर्त्तं तदसत्यं यदमूर्त्तं तत्सत्यम्"[c] इत्यादिश्रुतेः । मुखम् स्वरूपम्, अपिहितम् आवृतम् । पूषन् हे जगत्पोषक सूर्य । मण्डलस्थे मण्डलातिरिक्ते सत्यपुरुषे सम्बोधनस्य तात्पर्य्यम् । तत् पात्रम्, त्वम्, अपावृणु अपसारय; संहर १ इत्यर्थः । सत्यधर्म्माय सत्यस्य ब्रह्मणः धर्म्माय;

१ संहरेति । पात्रसंहरणप्रकारस्तु वक्ष्यमाणमन्त्रे स्फुटीभविष्यति ।

( a ) छान्दोग्योपनिषत्–८–३–४. ( b ) बृहदारण्यकोपनिषत् ५–५–२.
( c ) मैत्रायणीयोपनिषत् ६–३.

धर्मस्येत्येतत्—'सुखस्य' स्वरूपस्येति भावः "एष ह वै सत्यधर्म्मो यदादित्यस्यादित्यत्वम्.........यदादित्यस्य मध्येऽमृतम्...एतद् ब्रह्म" a इति श्रुतेः । दृष्टये दर्शनार्थम्; मम २ इति शेषः । मिथ्याभूते मण्डलेऽपावृते सति सत्यात्मनो ब्रह्मणः स्वरूपोपलब्धिः स्वत एव भवेदित्यर्थः । अत्र ब्रह्मणः स्वरूपं द्वैतरूपेण प्रस्तुत्य वक्ष्यमाणे मन्त्रेऽद्वैतात्मरूपेण दर्शयिष्यति ।

अत्रायमभिप्रायः—सर्वस्यापि वस्तुनो नित्यानित्यत्वरूपं धर्मद्वयमस्ति। तत्र यन्नित्यत्वं स सत्यस्य ब्रह्मणो धर्मः यच्चानित्यत्वं स मिथ्याभूतो मायिको धर्म्मः; तेनैवावरणभूतेन तत्पिहितं यन्नित्यत्वरूपं सत्यस्य ब्रह्मणः स्वरूपम् । तस्मिंश्चापावृते पुनस्तत् सत्यस्वरूपं दृश्येत—इति सूर्य्यदृष्टान्तेन प्रतिपादयति । तथा हि द्वे रूपे भवतः सूर्यस्य "शुक्रं ते अन्यद् यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि" bइति श्रुतेः। तत्र शुक्रं शुक्लं यत् प्रकाशकं मण्डलं तदनित्यं मायिकमित्यर्थः; अथ यजतं केवलं यजनीयं यन्न प्रकाशकं स्वरूपं तन्नित्यं ब्रह्मेत्यर्थःc। स्वरूपं तु मण्डलेनाच्छादितं मण्डलातिरिक्तम्; अतः सूर्यो मण्डलं संहरेच्चेत् स्वरूपं स्वत एव दृष्टिगोचरं भवेत् इति ।

श्रुतिरेषा बृहदारण्यकेdतथा मैत्रायणीयोपनिषद्यपिeपठ्यते। १५

२ ममेति । उपलक्षणमेतत् । सर्वस्यापि जनस्य दर्शनार्थमित्यर्थः । १५ ।

(a) मैत्रायणीयोपनिषत् ६–३५. (b) ऋग्वेदसंहिता ६–५८–१. (c) ऋग्वेद भाष्ये ६–५८–१. सायणाचार्यः (d) बृहदारण्यकोपनिषत् ५–१५–१. (e) मैत्रायणीयोपनिषत् ६–३५.

# अथ षोडशो मन्त्रः।

यदुक्तं सूर्यो मण्डलं संहरेच्चेत् स्वरूपं स्वत एव दृश्येतेति। तत्रकथं मण्डलसंहरणं कथं वा स्वरूपदर्शनमित्याशङ्क्य तदुभयं निरूपयन्नमृतासिद्धिप्रस्तावमुपसंहरति—

**पूषन्नेकर्षे यम सूर्य्यं प्राजापत्य व्यूह रश्मीन् समूह। तेजो यत्तेरूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि॥ १६॥**

ऋष्यादयः—ॐपूषन्नित्यस्य मन्त्रस्य दधीच ऋषिरुष्णिक् छन्दः सत्यदर्शी देवता विदेहमुक्तौ विनियोगः।

पूषन् तापालोकरसादिदानेन जगतः पोषणात् पूषा रविस्तत्सम्बोधनं हे पूषन्। व्यूह विगमय, स्वकीयमण्डलाद् बहिष्कुरु इत्यर्थः। रश्मीन् तापप्रदान् किरणान्। स्वान् १ इति शेषः। ततो निःशेषतापव्यूहनात् समूह संकोचय सम्यग् यथा भवति तथा विलोपय स्वमितिशेषः; स्वकीयकलेवरमित्यर्थः। एवं

---

१ स्वानिति। समस्तमपि जगत् सूर्यस्य रश्मिभिः परिपूर्णम्। अथ स्वरश्मिव्यूहनसमये सूर्यो जगदन्तर्गतांश्चापि रश्मीनादत्तेचेत्। तदुक्तम् "सूर्यो मरिचिमादत्ते सर्व्वस्माद् भुवनादधि" a इति। ततश्च जगदपि सूर्यमण्डलसमूहनमनुवर्त्तते।

---

(a) तैत्तिरीयारण्यक० 1-२-1.

व्यूहनसमूहनाभ्यां हिरण्मयपात्ररूपस्य सूर्यमण्डलस्य संहाररूपमपावरणं भवेत्।

अत्र व्यूहनसमूहनाभ्याम् अयं ज्यौतिष २ शास्त्रान्तर्गतो

२ ज्यौतिषेत्यादि। अत्र ज्यौतिषशास्त्रपदेन फलितज्यौतिषं न गृह्यते किन्तु वेदाङ्गभूतं गणितज्यौतिषम्, तदन्तर्गतनक्षत्रविद्यासिद्धान्त इत्यर्थः ( य इदानीं पाश्चात्यविज्ञानानुमोदितः )।

अत्र प्रसंगप्राप्तं किञ्चिदुच्यते। यथा तापप्रवेशक्रमेण वस्तुकलेवरं सूक्ष्मरूपे विस्तीर्णं भवति, तथा तापनिर्गमनक्रमेण स्थूलरूपे संकुचितं भवति। वस्तुविभिन्नत्वमपि तदन्तर्निहिततापांशस्यैव तारतम्येन घटते। यथा यथा तापव्यतिक्रमो भवति–एकमपिवस्तु तथा तथा रूपाद् रूपान्तरं गच्छद् भिन्नवत् प्रतिभाति। सर्वं वस्तुजातं (स्थूलरूपे) संकोचक्रमेण काले विभिन्नत्वं विहाय पारदे परिणमति, (सूक्ष्मरूपे) विस्तारक्रमेणाभ्रे च। पारदस्तु पुनस्तापनिर्गमनक्रमेण संकोचनसमाप्तिं प्राप्य तेजोमात्रावशिष्टो भवति। यतः स्थूलरूपस्य पारं ददाति तत उच्यते पारद इति। उक्तञ्च " संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः " a इति। अथ तत्तेजोऽग्रेऽभेदेनात्मैवासीत् " तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत " b " तत्तेज आत्मचैतन्यरूपं बलम् " c "अयमात्मा······तेजोमयः" d "तेजः परस्यां देवतायां सम्पद्यते" eइत्यादिश्रुतेः। तच्च तेजः पश्चात् सूक्ष्मतरवायुर्भवति, स च विक्षोभवशात् स्वत एव बहुधा भवति, तेन च बहुधाभूतेन घर्षणविघर्षणादिनाऽग्निरुत्पाद्यते " वायोरग्निः " f "सैषाऽनस्तमिता देवता यद्वायुः यतश्चोदेति सूर्योऽस्तं

( a ) माधवाचार्यकृतसर्वदर्शनसंग्रहे रसेश्वरदर्शनम् ( b ) छान्दोग्योपनिषत् ६–२–३. ( c ) नृसिंहोत्तरतापिनी ३. ( d ) बृहदारण्यकोपनिषत् ४–४–५. ( e ) छान्दोग्योपनिषत् ६–८–६ ( f ) तैत्तिरीयारण्यक० ८–१; तैत्तिरीयोपनिषत् २–१.

नक्षत्रविद्यासिद्धान्तोऽपि प्रदर्शितो भवति। परमाणुप्रभृतिब्रह्माण्डपर्य्यन्तस्य सर्व्ववस्तुनः कलेवरं ताप एव "पृथिव्येव ३ यस्यायतनमग्निः" a इति श्रुतेः। अतस्तापविगमक्रमेण कलेवरं संकुच्येत; निःशेषतापविगमे च तद्विलुप्येतैव। एतदुपयुक्तान् सम्बोधनविशेषानाह—एकर्षे यम सूर्य्य प्राजापत्य इति।

---

यत्र च गच्छति" b इत्यादिश्रुतेः। वायोर्बहुत्वञ्च श्रूयते "मरुद्भिरग्न आगहि" c इति। तञ्च ज्योतिर्लिङ्गरूपं वायुमयाग्नि प्रथमं मेघवत् प्रतिभानाद् अभ्रमित्याहुः—तस्माच्च सृष्टिः कल्पते। एतदर्थे श्रुतिरप्यस्ति "यदाहुः शाकधूमं महानक्षत्राणां प्रथमजं ज्योतिरग्रे" d इति। इत्थमभ्रादिपारदान्तं यत्तेजसश्चक्रवद् विवर्त्तनं तदेव कालात्मकं जगत्। तथा च श्रुत्यन्तरे निर्वचनम् "यः प्रागादित्यात् सोऽकालः। अथ य आदित्याद्यः स कालः" e इति। अयमेवाभ्रपारदवादो रसेश्वरदर्शने हरगौरीवीर्य्यमित्युक्तः।

तेजसो जगद्विवर्तनमेतदाकाशरूपमाधारमपेक्षते "आकाशो वाव तेजसो भूयान्" f इति श्रुतेः। आकाशश्चात्मनः सम्भूतः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" g इति श्रुतिशासनात्, तथा स्वप्नेपि स्वाप्नाकाशसंभवस्याऽऽत्मत एव दर्शनात्। अत एतद्विज्ञानमप्यात्मसापेक्षमित्येतस्य नास्तिकवादत्वं निरस्तम्।

३ पृथिव्येवेत्यादि। अस्मिन्नेवार्थे वक्ष्यमाणश्रुत्यन्तराणि

---

(a) बृहदारण्यकोपनिषत् ३-९-१० (b) बृहदारण्यकोपनिषत् १-५-२२, २७ (c) ऋग्वेदसंहिता १-१९-१. (d) अथर्ववेदपरिशिष्ट० १-५०. The idea that Creation is the product of स्पन्दनम् (Spandanam or Vibration.) of a primordial substance pervades the whole of the योगवासिष्ठ also. (e) मैत्रायणीयोपनिषत् ६-१५. (f) छान्दोग्योपनिषत् ७-१२-१. (g) तैत्तिरीयारण्यक ८-१; तैत्तिरीयोपनिषत् २-१.

एकर्षे एक एव ऋषति चरतीत्येकार्षिः । प्रलयसमये सर्वं जगत् स्वस्मिन्नुपसंहृत्य सूर्य्य एकाकी शून्यमार्गे गच्छति । तदुक्तम् "सूर्य्य एकाकी चरति" a इति । हे एकर्षे । तथा यम यमयति नियमे स्थापयति जगत् सर्वमिति यमः "मित्रो दधार पृथिवीमुत द्याम्" b "पूषा सुबन्धुर्दिव आपृथिव्याः" c "सूर्य नक्षत्राणामधिपते" d "आदित्येन चन्द्रमा भाति" e इत्यादि श्रुतेः । हे यम । तथा सूर्य्य सूते सर्वमिदं जगदिति सूर्य्यः "सूय-मानात् सूर्य्यः सवनात् सविता आदानादादित्यः" f इति श्रुतेः,

---

ग्राह्याणि "अग्निगर्भा पृथिवी" g "अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु" h "अग्निरसि पृथिव्यां श्रितः अन्तरिक्षस्य प्रतिष्ठा त्वयीदमन्तः विश्वं यक्षम् विश्वं भूतम् विश्वं सम्भूतम् विश्वस्य भर्त्ता विश्वस्य जनयिता" i इति । हिमखण्डेष्वपि परस्परं शैत्यस्य तारतम्यमनुभूयते तत्र हेतुरन्तर्गतस्याग्नेरेव न्यूनाधिक्यमित्यतः–सलिलेष्वप्यग्निः सन्निविष्ट इत्येवाह–'अग्नि-मापो बिभ्रति' इति ।

---

(a) शुक्लयजुर्वेद (वाजसनेय) संहिता २३–१०, २३–४६, कृष्णयजु-र्वेद (तैत्तिरीय) संहिता ७–४–१८–१, मैत्रायणीयसंहिता ३–१२–१९, १६६–२,. कठसंहिता चरकशाखा ४–७,. शतपथब्राह्मण १३–५–२–१२,. आश्वलायन-श्रौतसूत्र १०–९–२,. शाङ्खायनश्रौतसूत्र १६–५–४,. मानवश्रौतसूत्र ९–२—३; कात्यायनश्रौतसूत्र २०–५–२०. (b) ऋग्वेदसंहिता ३–५९–१,. कृष्ण-यजुर्वेदसंहिता ३–४–११. (c) ऋग्वेदसंहिता ६–५८–४,. तैत्तिरीयब्राह्मण २–८–५–४. (d) शाङ्खायनश्रौतसूत्र ४–१०–१. (e) श्रुतिरित्युल्लिखित-मानन्दगिरिस्वामिभिः शतश्लोकीव्याख्याम ५३. (f) मैत्रायणीयोपनिषत् ६–७. (g) बृहदारण्यकोपनिषत् ६–४–२२. (h) अथर्ववेदसंहिता १२–१–१९. (i) तैत्तिरीयब्राह्मण० ३–११–१–७.

" आश्चर्य्याणामनेकानां प्रतिष्ठा भगवान् रविः। यतो भूताः प्रवर्त्तन्ते सर्व्वे त्रैलोक्यसम्मताः ॥" a इति स्मृतेश्च। हे सूर्य्य। तथा प्राजापत्य प्रजापतेरपत्यमिति प्राजापत्यः सृष्टौ सर्वप्रथमजः " विमुचो नपात् " b इति श्रुतेः। हे प्राजापत्य। सर्वसम्बोधनविशेषाणां सृष्टिमूलभूते महासूर्ये तात्पर्य्यं यस्य समूहने जगत्सर्वमपि स्वयं समूह्यते। अनन्ताः सन्ति सूर्याः "सहस्रं सूर्य्याः " c इत्यादिश्रुतेः। तेषां मध्ये यः सर्वप्रथमजः स महासूर्य इति ज्ञेयम्। एतद्विषयक एवायं मन्त्रः। अत्र " सूर्य्य आत्मा जगतस्तस्थुषश्च " d " असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः " e " एषा वै प्रजापतेर्विश्वभृत् तनूः। एतस्यामिदं सर्व्वमन्तर्हितमस्मिंश्च सर्वस्मिन्नेषाऽन्तर्हिता " f इत्यादिश्रुतयोऽनुसन्धेयाः।

इत्थं सृष्टिसमूहने शून्यत्वं न प्रतिपन्नम्; व्यूढरश्मिपुञ्जरूपस्य तेजोमात्रस्यावशिष्टत्वात्। तदेवाह—तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामीति। पाठान्तरे ' तेजो ' इतिपदं पूर्व्वार्द्धस्यान्ते दृश्यते, तत्तु ओकारविशिष्टं सद् उत्तरान्वयित्वं ज्ञापयति। यत, ते तव, रूपं कल्याणतमम् नित्यत्वान्मुक्तिप्रदत्वाच्च मङ्गलम-

(a) महाभारत शान्तिपर्व्व ३६२-२. (b) ऋग्वेदसंहिता ६-५५-१. (c) तैत्तिरीयारण्यक १-७-५. (d) ऋग्वेदसंहिता १-११५-१, अथर्ववेदसंहिता १३-२-३५,. सामवेद अरण्यसंहिता ५-२,. शुक्लयजुर्वेदसंहिता ७-४२,. कृष्णयजुर्वेदसंहिता १-४-४३-१; शतपथब्राह्मण ४-३-४-१०,. तैत्तिरीयब्राह्मण २-८-७-४,. तैत्तिरीयारण्यक १-७-६,. ऐतरेयारण्यक. २-२-४-७ (e) छान्दोग्योपनिषद ८-६-१. (f) मैत्रायणीयोपनिषत् ६-६.

यम्—अत एव वरेण्यम्,. नानित्यमण्डलरूपं तस्येदानीं समूढत्वात् । तत्, ते तव सवितुर्देवस्य, तेजः व्यूढरश्मिपुञ्जम्-मण्डलसमूहनावशेषरूपं भर्ग इति यावत् । पश्यामि ज्ञानगोचरं करोमि—ध्यायामीति यावत् । अनेन "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि" a इति गायत्र्यास्तात्पर्यमग्नावेवेति प्रदर्शितम् । तथाच श्रूयते "अग्निर्वै वरेण्यम् । अग्निर्वै भर्गः । यज्ञो वै प्रचोदयति" b इति । 'सत्यधर्म्माय दृष्टये' इत्यत्रोपक्रान्तं सत्यमुखदर्शनं 'तत्ते पश्यामि' इति तेजोदर्शनेनोपसंहृतम् । तथाच श्रुत्यन्तरे निर्वचनम् " तेजसोंऽशमात्रमेतद् यदादित्यस्य मध्ये उदित्वा मयूखे ४ भवत एतत्सवित्सत्यधर्मः " c इति ।

अथ तेजसोपि स्वरूपविशेषमाह—योऽसाविति । योऽसौ पूर्वमादित्यमण्डलरूपः, पुनरसौ साम्प्रतं व्यूढरश्मिपुञ्जरूपः, पुरुषः पूर्णमनेन जगत्सर्वमिति पुरुषः " तेनेदं पूर्णं पुरुषेण सर्वम् " d इति श्रुत्युक्तः; तेजोरूपं सत्यवस्तु इत्यर्थः " यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषः " e "तद् यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः " f इत्यादि श्रुतेः । सोऽहमस्मि । सः पुरुषः तेजोरूपं वस्तु; सृष्टि-

४ मयूखे इति । ज्योतिर्लक्षणस्य तापरूपस्य च मयूखद्वयस्यैकत्राविर्भावसूचनार्थं द्विवचनमिति ज्ञेयम् ।

(a) ऋग्वेदसंहिता ३–६२–१०,. सामदेवसंहिता उत्तरार्चिक ८१२. (b) तलवकारब्राह्मण ४–२८–१. (c) मैत्रायणीयोपनिषत् ६–३५. (d) श्वेताश्वतरोपनिषत् ३–९. (e) बृहदारण्यकोपनिषत् २–५–५. (f) बृहदारण्यकोपनिषत् ५–५–२.

कारिणी शक्तिरित्यर्थः। अहम्, अस्मि भवामि। तत्तेज आत्मैव; शक्तिशक्तयोरभेदात् " अनीदवातं स्वधया तदेकम् " a " ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् " b " शक्तिशक्तिमतोः........परमार्थतः । अभेदश्चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ " c इत्यादिश्रुतिस्मृतिभ्यः। अत्राहम्पदस्य लक्ष्यार्थो ग्राह्यो न वाच्यः। अत एव आदौ मध्ये तथाऽन्ते आत्मैवैकं सत्यवस्तु " एकमेवाद्वितीयम् " d इतिश्रुतिप्रसिद्धमिति पर्य्यवसितम्। तथाच श्रूयते " आत्मैवेदमग्र आसीत् पुरुषविधः " e " तत्तेज आत्मचैतन्यरूपं बलम् " f " परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " g " तेजोमूलमन्विच्छ तेजसा सन्मूलमन्विच्छ " h " तेजः परस्यां देवतायां सम्पद्यते " i " अयमात्मा.........तेजोमयः " j "आत्मतस्तेजः" k " एष ह वै सत्यधर्म्मो यदादित्यस्यादित्यत्वं तच्छुक्लं पुरुषमलिङ्गम्....एतत्सत्यधर्म्मो नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतत्। यदादित्यस्य मध्येऽमृतम्.........एतद्ब्रह्मैतदमृतमेतद् भर्गः॥ " l इति। स्मर्यतेऽपि " तेजस्तेजस्विनामहम् " m " यदादित्यगतं तेजस्तत्तेजो

( a ) ऋग्वेदसंहिता १०-१२९-२ ( नारदीयसूक्त ) (b) श्वेताश्वतरोपनिषत् १-३. ( c ) कूर्म्मपुराण १-१२-२८. ( d ) छान्दोग्योपनिषत् ६-२-१. ( e ) बृहदारण्यकोपनिषत् १-४-१. ( f ) नृसिंहोत्तरतापिनी ३. ( g ) श्वेताश्वतरोपनिषत् ६-८. ( h ) छान्दोग्योपनिषत् ६-८-४. ( i ) छान्दोग्योपनिषत् ६-८-६. ( j ) बृहदारण्यकोपनिषत् ४-४-५. (k) छान्दोग्योपनिषत् ७-२६-१. (l) मैत्रायणीयोपनिषत् ६-३५ ( m ) श्रीमद्भगवद्गीता ७-१०, १०-३६.

विद्धि मामकम् ” a “ सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी । ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥ ” b इति । या ‘ ईशावास्यम् ’ इत्यत्रोक्ता ईश्वरेच्छारूपिणी कल्पनाशक्तिः सैवेयं तेजोरूपा तप इत्याख्या सृष्टिकारिणी शक्तिः “ सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत ” c “ यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ” d “ ऋतञ्च सत्यं चाभीद्धात्तपसो ऽध्यजायत ” e “ तपसस्तन्महिनाजायतैकम् ” f “ अग्निना तपोऽन्वभवत् ” g इत्यादिश्रुतेः । एतावता सूर्यात्मनोरभेद एव तत्त्वतः प्रतिपादितः । तथाच श्रुतयः “ योऽसावादित्ये पुरुषः सोऽसावहमिति ” h “ य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि ” i “ अहं मनुरभवं सूर्यश्च ” j “ य एष आदित्ये पुरुष स परमेष्ठी ब्रह्मात्मा ” k “ अथात आदित्यो ब्रह्मेत्यादेशः ” l “ स यश्चायं पुरुषे

( a ) श्रीमद्भगवद्गीता १५–१२. ( b ) कूर्मपुराण १–१२–२०. ( c ) तैत्तिरीयारण्यक ८–६,. तैत्तिरीयोपनिषत् २–६ ( d ) मुण्डकोपनिषत् १–९. ( e ) ऋग्वेदसंहिता १०–१९०–१. ( f ) ऋग्वेदसंहिता १०–१२९–३. ( नासदीयसूक्त ). ( g ) तैत्तिरीयसंहिता ७–३–१४–१; कठसंहिता चरकशाखा ३५–१५; तैत्तिरीयब्राह्मण ३–८–१७–३. ( h ) मैत्रायणीयोपनिषत् ६–३५,. ईशावास्योपनिषत् माध्यन्दिनशाखा १७. ( i ) छान्दोग्योपनिषत् ४–११–१. ( j ) ऋग्वेदसंहिता ४–२६–१,. बृहदारण्यकोपनिषत् १–४–१० ( k ) महानारायणोपनिषत् २३–१. ( l ) छान्दोग्योपनिषत् ३–१९–१.

यश्चासावादित्ये स एकः" a इत्येवमादयः ५ । ततश्च सूर्योपासनेन तत्त्वत आत्मैवोपासितो भवति। तथा च श्रुतिः "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" b इति। यथा सूर्य्यः स्वरूपत आत्मैव तस्य मण्डलं मिथ्या; तथा सर्वमपि वस्तु स्वरूपत आत्मैव तस्य दृश्यं रूपं मिथ्या। "इदं सर्व्वं यदयमात्मा" c "सर्वमात्मैवाभूत्" d "एतस्यैव सर्वे रूपमभवन्" e मायामात्रमिदं द्वैतम्" f इत्यादि च श्रुतिशासनम्। एवं नित्यानित्यविचारेण यः सर्वत्र स्वात्मानमेवैकं पश्यति सः अमृतमश्नुते–इति सोऽहम् ६

५ इत्येवमादय इति। "एतद् ब्रह्मैतस्यैतत् तेजो यदसावादित्यः" g "येनादित्यस्तपति तेजसा भ्राजसाच" h "येन सूर्यस्तपति तेजसेद्धः" i "तपाम्यहं (सूर्य्ये)" j "इत्यादि श्रुतिस्मृतयोपि यथायोग्यं योज्या इत्यभिप्रायः।

६ सोऽहमिति। महावाक्यमिदं जीवब्रह्मणोरभेदप्रतिपादकत्वात्। तथाचाभेदप्रतिपादकश्रुत्यन्तराणि "हंसः सोहम्" k "अहं ब्रह्मास्मि" l "अयमात्मा ब्रह्म" m "आत्मा ब्रह्मैव ब्रह्मात्मैव" n तत्वमसि" o "त्वमेव प्रत्यक्षं ब्रह्मासि" p इत्यादीनि।

(a) तैत्तिरीयारण्यक ८–८; तैत्तिरीयोपनिषत् २–८. (b) बृहदारण्यकोपनिषत् १–४–१०. (c) बृहदारण्यकोपनिषत् २–४–६. (d) बृहदारण्यकोपनिषत् २–४–१४. (e) बृहदारण्यकोपनिषत् २–५–२१. (f) गौडपादकारिका १–१७. (g) मैत्रायणीयोपनिषत् ६–४. (h) महानारायणोपनिषत् १–३. (i) तैत्तिरीयब्राह्मण ३–१२–९–७. (j) श्रीमद्भगवद्गीता ९–१९. (k) नृसिंहोत्तरतापिनी ९. (l) बृहदारण्यकोपनिषत् १–४–१. (m) माण्डूक्योपनिषत् २. (n) नृसिंहोत्तरतापिनी ९. (o) छान्दोग्योपनिषत् ६–८–७ (p) तैत्तिरीयारण्यक ७–१, तैत्तिरीयोपनिषत् १–१.

इत्यस्य तात्पर्य्यम् । एष एव सम्भूतिमन्त्रप्रस्तावितो ज्ञानविशेषः । कर्मणा स्वर्गलोकं प्राप्य एतेन हि ज्ञानविशेषेण तत्रैव तिष्ठति न पुनः पतति; किञ्च तत्र ज्ञानं क्रमेण वर्द्धयन् कालेन ज्ञान-परिपाकदशायां स्वर्गादुश्चतरं विदेहमुक्तिपदं प्राप्नोति । श्रुति-रपि भवति " तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः " a इति । ज्ञानपरिपाकस्तु न कदापि मनुष्यैरि-हैव पूर्णमवाप्तुं शक्यः " माऽतिप्राक्षीर्मा ते मुर्द्धा व्यपतत् " b इति श्रुत्या ब्रह्मणि ' अतिप्रश्नस्य ' निषेधात् । इत्थं सूर्यव्यू-हनसमूहनप्रदर्शनमुखेन अमृतसिद्धिप्रस्तावः समापितः ।

श्रुतिरेषा बृहदारण्यके c पि पठिता । १६

---

एवं हि महावाक्यविचारजन्यं ज्ञानमेवात्मदर्शनमित्युच्यते आत्मदर्शनेन च पुनर्जन्म निवर्तते । तथा च श्रूयते " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः " d " न च पुनरावर्तते " e इत्यादि । एतदेवामृत-सिद्धिः परमपदमिति चाम्नायते । तदुक्तं भगवता बुद्धेन तथा-गतेनापि " गृहकारक दृष्टोऽसि गेहं कर्तासि नो पुनः । सर्वास्ते पार्श्वका भग्ना गृहकूटं विसंस्कृतम् । विसंस्कारगतं चित्तं तृष्णानां क्षयमभ्यगात् ॥ " f इति । एतेन बौद्धानां नास्तिकत्वेपि बुद्ध-देवस्याद्वैतवादित्वं ततश्च सनातनधर्मित्वं प्रतीयते । उक्तञ्च " सर्वज्ञः सुगतो बुद्धः अद्वयवादी विनायकः " g इति । १६

---

( a ) बृहदारण्यकोपनिषत् ४–४–८. ( b ) बृहदारण्यकोपनिषत् ३–६–१. ( c ) बृहदारण्यकोपनिषत् ५–१५–१. ( d ) बृहदारण्यकोपनिषत् ३–८–१०. ( e ) छान्दोग्योपनिषत् ८–१५–१. ( f ) धर्मपद–धम्मपद–( हरिहरारण्यस्वामिसंस्कृत ) ११–९. ( g ) अमरकोष १–१–१–९.

# अथ सप्तदशो मन्त्रः ।



अथ कर्मसहचरितज्ञानोपासकस्यामृतत्वप्राप्तिमुक्त्वा तद्व्यतिरिक्तस्यान्धं ततः प्रविशतः कर्मफलप्राप्तिमाह—

**वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।**
**ॐ क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर ।१७।**

ऋष्यादयः—ॐ वायुरित्यस्य मन्त्रस्य दधीच ऋषिरार्ची पङ्क्तिच्छन्दः संसारी देवता कर्मफले विनियोगः ।

वायुः प्राणवायुः—तदुक्तम् " वायुरसि प्राणः " a " वायुः प्राणो भूत्वा नासिके प्राविशत् " b " प्राणो वायुः प्रकीर्त्तितः " c " योऽयं प्राणः स वायुः " d " प्राणो वै वायुः " e इत्यादि—यः पूर्वं ' मातरिश्वा ' इत्युक्तः f । अमृतम् अमरमविनाशिनम्; मरणधर्मरहितमितियावत् । अनिलम् प्राणम्—प्राणस्य प्राणम्; तैजसादिसंज्ञया वेदान्तप्रसिद्धं जीवभूतम् १ आत्मानमित्यर्थः

१ जीवभूतमिति । जीव एवामृतोऽनिल इत्युच्यते । अमृतो यतः स्वरूपतः परमात्मा, अनिलो यतः जीवरूपतः सूक्ष्मो वायुरिव " स वायुमिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत् " g इतिश्रुतेः ।

(a) कृष्णयजुर्वेदसंहिता ३-३-५-१; मानवश्रौतसूत्र ७-२-६; शाङ्खायनश्रौतसूत्र १०-१७-४. (b) ऐतरेयारण्यक २-४-२-४,. ऐतरेयोपनिषत् १-२-४. (c) अमृतबिन्दूपनिषत् ३६. ) (d) बृहदारण्यकोपनिषत् ३-१-५. (e) मैत्रायणीयोपनिषत् ६-३३. (f। ईशावास्योपनिषत् ४. (g) मैत्रायणीयोपनिषत् २-६.

"अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" a "स उ प्राणस्य प्राणः" b "अध्यात्मं चैव प्राणस्य" c "यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा" d इत्यादिश्रुतेः । शरीरे वर्त्तमानं सूचयतीति वाक्यशेषः । यावच्छरीरे जीवो वर्तते तावत्प्राणवायुरिति भावः । "वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ॥" e इत्यादिश्रुतेः । अथ २ किञ्च, इदम् दृश्यमानम्, शरीरम् अस्थिमांसादिसंघातरूपं देहमात्रमित्यर्थः । भस्मान्तम् भस्मैवान्तः परिणामो यस्यैतादृश्म् ; भस्मावसानम्—वस्तुतस्त्वधुनापि भस्मैव; अतितुच्छमित्यर्थः । तथाच श्रुतिः "मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मानोऽधिष्ठानम्" f "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" g इति,. स्मृतिश्च "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः" h इति । संसारिणमधिकृत्येयदमुक्तं न संन्यासिनमिति भस्मशब्दतात्पर्य्यम् । एवमात्मनोऽमृतत्वे शरीरस्य च भस्मान्तत्वे सति किम्? इत्याह—ॐ क्रतो इत्यादि । ॐ शुभम्;

---

२ अथेति । एतेन स्वदेहेपि नित्यानित्ययोरेकत्रदर्शनमनुस्मारितम् ।

---

(a) बृहदारण्यकोपनिषत् ४–४–७. (b) केनोपनिषत् १–२ (c) प्रश्नोपनिषत् ३–१२. (d) बृहदारण्यकोपनिषत् २–५–४. (e) ऋग्वेदसंहिता १०–१८६–३. (f) छान्दोग्योपनिषत् ८–१२–१. (g) छान्दोग्योपनिषत् ६–११–३. (h) श्रीमद्भगवद्गीता २–१८.

वक्ष्यमाणवार्ताया मङ्गलमयत्वम् ३ अनेन सूचितम् "ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा ४ विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥" a इति स्मृतेः । क्रतो यज्ञस्य क्रतुमित्येतत्; परलोकमित्यर्थः । अस्या उपनिषदो यजुर्वेदीयत्वात् यजुर्वेदे च क्रतोर्यज्ञवाचित्वात् यज्ञस्य च पारलौकिकत्वात्; अत्र क्रतुशब्देन ५ परलोक उपलक्षितः । स्मर, अवधारय; जीवभूतस्यात्मनोऽमृतत्वाच्छरीरे भस्मान्ते तस्य स्वर्गनरकादिपरलोकगमनपुनर्जन्मवार्तां ६ मा विस्मर किन्तु सर्वदा सविशेषं स्मरेत्याशयः । 'क्रतो' इत्यत्र सम्बन्धमात्रविवक्षायां

---

३ मङ्गलमयत्वमिति । वेदबाह्यानामपि सर्वेषां विभिन्नमतावलम्बिनां परलोके कर्मफलभोगवार्तायामाग्रहातिशयो दृश्यते । सा च वार्ता सर्वसाधारण्येन पापनिवृत्तिपुण्यप्रवृत्तिकारकत्वान्मङ्गलमयीति भावः ।

४ कण्ठं भित्वेति । अथ भवतु सृष्टिरित्यङ्गीकारात्मकोङ्कारध्वनिरूपसंकल्पपूर्वकं सृष्टिश्चकारेश्वर इति सर्ववादिसम्मतम् । तदुक्तमीशावास्यमिति ।

५ क्रतुशब्देनेति । माध्यन्दिनशाखागतेन 'क्लिबे स्मर' इति पाठेन तु परलोकवार्ता स्पष्टं प्रतिपादिता, तस्य 'योग्यं लोकं स्मर' इत्यर्थात् ।

६ पुनर्जन्मेत्यादि । स्थूलशरीरे सूक्ष्मशरीरमस्ति "इहैवान्तःशरीरे सौम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ति" b इति श्रुतेः । तत् स्वप्नकाले जाग्रच्छरीराभिमानं त्यक्त्वा तदनुकारं स्वप्नशरीरं निर्माय तत्र च यथास्थानमिन्द्रियत्यादिकं सन्निवेश्य जाग्रद्वत्

---

(a) सांख्यसूत्रानिरुद्धवृत्तौ स्मृतिरिति लिखितम् १-१. (b) प्रश्नोपनिषत् ६-२.

कर्म्मणि षष्ठी; विसर्गलोपस्त्वार्षः। तथा कृतं स्मर। परलोकादिस्म-

स्वप्ने विहरति शृणोति पश्यति च। तथा च श्रूयते "अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः" a "स यत्र प्रस्वपित्यस्य लोकस्य सर्व्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्म्माय स्वेन भासा स्वेन ज्योतिषा स्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति" b इत्यादि। तदा निपतितं स्थूलशरीरं तु मृतवन्निश्चेष्टं तिष्ठति न शृणोति न च पश्यति c। एतच्च सूक्ष्मशरीरं स्थूलशरीरे प्राणरूपेण रज्जुना बद्धं सन्निवसति "प्राणबन्धनं हि सौम्य मनः" d "यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः" e "प्राणेन रक्षन्नवरं कुलायम्" f इत्यादिश्रुतेः। अथ मृत्युकाले सर्वैरिन्द्रियैः सह प्राणं चापि गृहीत्वा स्थूलशरीरं सर्वथा परित्यज्य तेजोरूपेण प्रैति तस्मात्तैजस इति प्रेत इति चोच्यते। तथा च श्रुतिः "वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम तत्सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुः" g इति, "स्वप्नस्थानस्तैजसः" h इति च। एतदेव प्राणस्योत्क्रमणं नाम। श्रूयते च "यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतः" i "तमुत्क्रामन्तं प्राणोऽनुत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति" j "स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति" k इत्यादि। यथा प्राणो जीवनकाले सूक्ष्मशरीरेण सह वर्तते मृत्युकाले चोत्क्रामति तथा पुनर्जन्मकाले तदन्वा-

(a) वृहदारण्यकोपनिषत् २–१–१७. (b) वृहदारण्यकोपनिषत्. ४–३–९. (c) वृहदारण्यकोपनिषत् ४–४–२. (d) छान्दोग्योपनिषत् ६–८–२ (e) कौषीतकिब्राह्मणोपनिषत् ३–२ (f) वृहदारण्यकोपनिषत् ४–३–१२. (g) वृहदारण्यकोपनिषत् ३–७–२ (h) माण्डूक्योपनिषत् १०. (i) कौषीतकिब्राह्मणोपनिषत् ३–३. (j) वृहदारण्यकोपनिषत् ४–४–२. (k) कौषीतकिब्राह्मणोपनिषत् ३–३.

रणानन्तरं त्वयेह लोके बाल्यप्रभृत्यद्यावधि यत्कृतम्; धर्म्मा-

गच्छति । यथा स्वप्ने स्वप्नद्रष्टुर्वन्यगजादिशरीरप्राप्तिः कदाचिद् भवति a तथा पुनर्जन्मनि प्रेतस्य शरीरान्तरप्राप्तिः सम्भवत्येव । प्राक् पुनर्जन्मनः प्रेतात्मा मन्त्रादिभिरिहैव पुनरानेतुं शक्यः "यमादहं वैवस्वतात् सुबन्धोर्मन आभरम्" b इति श्रुतेः । प्रेतात्मा पुनर्जन्म प्राप्य पुनः प्रेतो भूत्वा पुनर्जायते "आत्मा कृतकृत्यो वयोगतः प्रैति स इत प्रयन्नेव पुनर्जायते" c इति श्रुतेः । एवं जन्ममरणक्रमेण स्वप्नात् स्वप्नान्तरमिव बहूनि जन्मानि गच्छति । एतदेव जीवदशा बद्धावस्था दुःखमयत्वान्नरकश्च । तत्र बहुजन्मसमष्टिरेव मोहनिद्रारूपमेकं जन्म । अथ यन्मोहनिद्रातो जागरणं तत्तु द्वितीयं जन्म, सा च ब्रह्मात्मैकत्वदशा मुक्तावस्था सुखमयत्वात् स्वर्गश्च-इति वेदसंहितासंमतं जन्मद्वयम् । मृत्युकाले यत् प्राणस्योत्क्रमणमुक्तं तत्तु बद्धजीवस्य, न मुक्तस्य । मुक्तजीवस्य देहावसाने प्राणोत्क्रमणं न भवति, तदा तस्य प्राणादिकं वाय्वादि-स्वस्वकारणे क्रमविरतिं गच्छति, ततश्च प्राणादेः संघातरूपं सूक्ष्मशरीरं विलीयते तदानीं सूक्ष्मशरीरोपहितो जीवश्च परमात्मस्वरूपेऽवस्थितो भवति तदेव तस्य निर्वाणमित्युच्यते । श्रूयतेच "न तस्य प्राणा उत्क्रामन्ति" d "अत्रैव समवलीयन्ते" e "अग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्" f "ब्रह्मैव सन् ब्रह्माप्येति" g इति । तथा निर्वाणलाभे न पुनरावृत्तिः "ब्रह्मविदाप्नोति परम्" h "एतस्मान्नपुनरावर्तन्ते" i "स्थानत्रयाद् व्यतीतस्य पुनर्जन्म न विद्यते" j इत्यादिश्रुतेः ।

(a) योगवासिष्ठमहारामायण निर्वाणप्रकरण पूर्वार्द्ध ४१-३०. (b) ऋग्वेद-संहिता १०-६०-१०. (c) ऐतरेयारण्यक ५-४; ऐतरेयोपनिषत् २-४. (d) बृहदारण्यकोपनिषत् ४-४-६. (e) बृहदारण्यकोपनिषत् ३-२-११. (f) बृहदारण्यकोपनिषत् ३-२-१३. (g) बृहदारण्यकोपनिषत् ४-४-६. (h) तैत्तिरीयारण्यक ८-१., तैत्तिरीयोपनिषत् २-१. (i) प्रश्नोपनिषत् १-१०. (j) ब्रह्मबिन्दूपनिषत् ११.

धर्मादि कर्म्मानुष्ठितम्—यदनुसारेण च परलोके शुभाशुभ-फलप्राप्तिर्भविष्यति—तदपि स्मर; स्मृत्वा ७ चात्मनः शुभ-मिच्छन्नधर्मकामादिदोषजातं परित्यज्य सुपथा गच्छेत्यर्थः । तथा च श्रुतयः "युवा ८ सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥" a "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" b "अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते" c "तद् य इह रमणीयचरणा अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् । अथ य इह कपूयचरणा अभ्याशोह यत्ते कपूयां योनिमापद्येरन् ॥" d "इह चेदवेदीदथ सत्यमस्ति न

७ स्मृत्वेति । धर्माधर्मादिसूक्ष्मतत्त्वस्मरणेऽन्तःकरणशुद्धिरपेक्ष्यते, तत्राहारशुद्धिः परमोपयोगिनीत्यवगन्तव्यम् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" e इतिश्रुतेः।

८ युवेत्यादि—युवा बाल्यवार्द्धक्याद्यैर्देहविकारैर्विरहित आत्मा, सुवासाः शोभनं वास आच्छदनं यस्य स सुवासाः अन्तःकरणोपहितः, परिवीतः शरीरावृतः सन्, आगात् जीवदशां प्राप्तः । स, उ, जायमानः सन्, स्वभावतः श्रेयान् सत्प्रवृत्तिकः, भवति इति हेतोः स्वाध्यः सुखेनाराध्यः—अनायासेन

(a) ऋग्वेदसंहिता ३–८–४. (b) छान्दोग्योपनिषत् ३–१४–१. (c) बृहदारण्यकोपनिषत् ४–४–५. (d) छान्दोग्योपनिषत् ५–१०–७. (e) छान्दोग्योपनिषत् १–२६–२.

चेदिहावेदीन्महती विनष्टिः " a इति । स्मृतिश्च "प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः । नित्यश्च तत्फलं भुङ्क्ते देहपातादनन्तरम् ॥" b इति । 'क्रतो स्मर कृतं स्मर' इति द्विरुक्तिर्दधीचदृष्टमन्त्रसमुच्चयस्य समाप्तिं ज्ञापयति । वक्ष्यमाणमन्त्रस्तु अगस्त्यदृष्टः ।

मन्त्रोऽयं बृहदारण्यके c तथा शतपथब्राह्मणे d पि पठितः । १७ ।

---

सन्मार्गे प्रवर्तयितुं शक्य इत्यर्थः । तम् आत्मानम्, धीरासः धीराः धैर्यवन्तः, कवयः ज्ञानिनः, देवयन्तः देवत्वं प्राप्तुमिच्छन्तः, मनसा मनोबलेन तपश्चरणादिना, उन्नयन्ति सन्मार्गावलम्बनेन ऊर्ध्वं नयन्ति । तथा च श्रुत्यन्तरेषु निर्वचनानि "तपसा देवा देवतामग्र आयन् तपसा ऋषयः सुवरन्वविन्दन्" e "मर्त्या ह वा अग्रे देवा आसुः" f "देवा उ वा अग्र अथ मनुष्याः" g "यथा वै मनुष्या एवं देवा अग्र आसन्" h "यज्ञेन वै देवाः स्वर्गं लोकमायन्" i इत्यादीनि ।



---

(a) केनोपनिषत् १३ (b) अपरोक्षानुभूति ३८. (c) बृहदारण्यकोपनिषत् ५-१५-१. (d) शतपथब्राह्मण १४-८-३-१. (e) तैत्तिरीयारण्यक १०-६३-३. (f) शतपथब्राह्मण. (g) शतपथब्राह्मण. (h) तैत्तिरीयसंहिता. (i) तैत्तिरीयसंहिता । The last four श्रुतिs have been fraquently referred to by Dr. K. M. Banerji in his "Relation between Christianity and Hinduism."

# अथाष्टादशमन्त्रोपक्रमः ।



ज्ञानकर्म्मणोः साहचर्य्यप्रस्तावे ज्ञानं निरूप्येदानीं कर्म्म निरूपयति । अग्निहोत्रानुष्ठानमेव तत्कर्म यदिहाभिप्रेतम् । यज्ञाग्निद्वारा मनुष्या देवैः सह सम्बध्यन्ते ततश्चाग्निनमस्कारो देवेभ्य एव गच्छति "अग्निर्वै सर्व्वा देवताः" a इति श्रुतेः । अग्निनमस्कारेण यत्सुफलं लभ्यते तत्राग्नेः कर्तृत्वं गौणं देवानां कर्तृत्वं मुख्यमित्यवधार्य्य वक्ष्यमाणमन्त्रः पठितव्यः । अन्यत्रापि श्रूयते "इमे मित्रो वरुणो दुलभासोऽचेतसं चिच्चितयन्ति दक्षैः । अपि क्रतुं सुचेतसं वतन्तस्तिरश्चिदंहः सुपथा नयन्ति ॥" b इति ।

---

( a ) ऐतरेयब्राह्मण १-१-४. ( b ) ऋग्वेदसंहिता ७-६०-६.

# अथाष्टादशो मन्त्रः ।



'क्रतो स्मर १ कृतं स्मर' इत्यत्रेहलोके कृतं कर्म्म परलोके फलतीति स्मृत्वाऽधर्म्मपथं परित्यज्य धर्मपथेन गच्छेति यदुक्तं तत्र कथं धर्म्माधर्मौ विविच्य धर्मपथेन गमनमित्याशङ्कायामाह—'अग्नेरुपासेनन धर्मपथप्रवर्त्तनं स्वत एव भवेत्' इति —एतदर्थे ऋचं श्रावयति—

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम । १८ ।

ऋष्यादयः—ॐ अग्ने नयेत्यस्य मन्त्रस्य अगस्त्य ऋषिस्त्रिष्टुप् छन्दः अग्निर्देवता प्रार्थने विनियोगः ।

---

१ क्रतो स्मरेत्यादि । 'क्रतो स्मर कृतं स्मर' इत्यनेन 'मा गृधः कस्यस्विद्धनम्' इत्यनेन च स्वचेष्टारूपः पुरुषकारः सूचितः । तथा 'ईशा वास्यमिदं सर्वम्' इत्यनेन सर्वमीश्वरेच्छाकृतमिति प्रतिपादितम् । तत्र सर्वस्यापीश्वरेच्छावशत्वे सति कथं तद्विरोधिनः पुरुषकारस्यावसर इति चेदुच्यते—पुरुषकारोपीश्वरेच्छावशेनैव भवति ॐ तथा सर्वत्रेश्वरेच्छादर्शनमपि पुरुषकारेणैव भवति; स च पुरुष्कारो मार्गयाचनसामर्थ्यादित्याच-

---

ॐ पञ्चदशीनासवेदान्तप्रकरणे विद्यारण्यमुनीश्वराः ७-१५६; योगवासिष्ठमहारामायण उत्पत्तिप्रकरण ६२.

अन्वयप्रदर्शनम्—अग्ने देव विश्वानि वयुनानि विद्वान् ( त्वम् ) अस्मान् राये सुपथा नय, जुहुराणम् एनः अस्मत् युयोधि । ( वयम् ) भूयिष्ठाम् ते नम उक्तिम् विधेम ।

अग्निः तापात्मकं तेजः२। अत्रातीतमन्त्रोक्तं सूर्य्यसमूहनं स्मर्त्तव्यम् । जगतस्तेजोमात्रावशिष्टत्वात् तेजोमयाग्निना सत्यधर्म्मा-

र्य्यपादवचनेन a प्रतीयते । यन्मार्गयाचनं तदेवोपासनं प्रार्थनं यजनं स्मरणमित्याद्याहुः प्रेक्षावन्तः । प्रार्थना फलेनैव पुरुषकार आविर्भवति ' धियो यो नः प्रचोदयात् ' इत्याद्युक्तेः, हेतुश्चात्र पुनः पुनः सङ्कल्पनमेव; अतो येषां मार्गयाचनसामर्थ्यमस्ति तेन तेषु पुरुषकारस्याप्यवसरोऽस्त्येव–इति । तथा च श्रुतिः " शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ " b " स वा अयमात्मा ब्रह्म विज्ञानमयः ...... काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेन " c इत्यादि । एतदभिप्रेत्य मार्गयाचनप्रकारः ' अग्ने नय सुपथा ' इति मन्त्रेण प्रस्तूयते--तमेवावतारयति ' क्रतो स्मर ' इत्यादिना ।

२ तापात्मकं तेज इति । ' हिरण्मयेन पात्रेण ' इत्यादिना मन्त्रेण सूर्यस्योष्णप्रकाशरूपमण्डलस्यापावरणमभिमतमित्युक्त्वा कथमधुना पुनरग्नेरुष्णप्रकाशरूपप्रतीकस्य वरणमित्याशङ्कानिवृत्त्यर्थमुक्तम् ' अग्निस्तापात्मकं तेजः ' इति । अग्नेरुष्णप्रकाशरूपप्रतीकमसत्, व्यूहिततापात्मकतेजोरूपं सत्—"असच्चसच्च परमे व्योमन् .........अग्निर्ह नः प्रथमजा ऋतस्य " d इति च श्रुतिः ।

(a) ईशावास्योपनिषद्भाष्ये शङ्करभगवत्पादाचार्याः १७, १८.(b) मुक्तिकोपनिषत् २–५. ( c ) बृहदारण्यकोपनिषत् ४–४–५. ( d ) ऋग्वेदसंहिता १०–५–७.

रूप्यतेजोऽभिन्नं ब्रह्मैवाभिधीयते ३। तथाच श्रूयते " यः पुरुषः सोऽग्निर्वैश्वानरः " a " आत्मानं वैश्वानरमुपास्ते " b " अस्यैतद् भास्वरं रूपं यदमुष्मिन्नादित्ये तपत्यग्नौ च " c "तेजश्चैवाग्निसूर्य्ययोः" d " लोकादिमग्निं तमुवाच " e " अग्निर्भूतानामधिपतिः " f इत्यादि। हे अग्ने ४। नय गमय प्रवर्त्तय। अग्नेर्नयनं प्रवृत्त्युत्पादनमेव। पादेन्द्रियस्याग्निकार्य्यत्वाच्चराचरस्य गतिप्रवृत्त्यादिकमपि अग्निकृतमेवेति वेदान्तसंमतम्। ततो मार्गदेवादग्नेर्मार्गयाचनं प्रशस्तम्। राये धनाय विपुलैश्वर्य्यलाभाय-ऐहिकसुखसम्भोगार्थमित्यर्थः; अग्न्युपासकानां न कदापि दारिद्र्यम् ५ इतिभावः। तथाच श्रुतिः " अग्निमीडे पुरोहितं यज्ञस्य

३ ब्रह्मैवाभिधीयत इति। तथा च सति ब्रह्मोपासनमग्न्युपासनद्वारैव भवति। तथैवहि श्रूयते " एतं ह्येवात्मानं बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्य्यव एतं महाव्रते छन्दोगाः " g " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" h इत्यादि। ब्रह्मोपासने प्रकारान्तरं नास्त्येव—तस्याद्वैतत्वेनोपास्योपासकभावरहितत्वात्। तस्मादुक्तम् "यज्ञो वै विष्णुः" i इति।

४ अग्ने इति। अङ्गतीति अग्निः। 'अगि गतौ' " अङ्गेर्नलोपश्च " j इति निः, नलोपश्च। व्युत्पत्त्यापि अग्नेर्गतिकर्तृत्वं प्रसिध्यति, नयनकर्तृत्वं तु सुतरां सिद्धमिति प्रकृतोपयुक्तमेव सम्बोधनम्।

५ दारिद्र्यमिति। रत्नधातुनिवहानां सृष्टिकर्ताऽग्निः। ततः स

(a) मैत्रायणीयोपनिषत् २–६. (b) छान्दोग्योपनिषत् ५–१८–१. (c) मैत्रायणीयोपनिषत् ६–१७. (d) मैत्रायणीयोपनिषत् ६–२७. (e) कठोपनिषत् १–१५. (f) कृष्णयजुर्वेदसंहिता ३–४–५–१. (g) ऐतरेयारण्यक ३–२–३–१२. (h) वृहदारण्यकोपनिषत् ४–४–२२. (i) कृष्णयजुर्वेदसंहिता १–७–४. (j) उणादिसूत्र।

देवमृत्विजम् होतारं रत्नधातमम्" a "अग्निना रयिमश्नवत् पोषमेव दिवे दिवे" b "त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि" c "अग्निर्दाद्द्रविणं वीरपेशाः" d "अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य" e "हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह" f "इत्यादिः। एतेन प्रवृत्तिमार्गो बहुमान्यः कृतः। तदुक्तम् "वेदो नित्यमधीयतां ६ तदुदितं कर्म स्वनुष्ठीयताम्" g "वेदात् प्रवृत्तिः प्रवृत्तेर्यज्ञो यज्ञात् पर्जन्यः पर्जन्यादन्नम्" h "निर्वेदादात्मसम्बोधः सम्बोधाच्छास्त्रदर्शनम् । शास्त्रार्थदर्शि-

---

एवोपासितः सन् 'रत्नधा' भवति—दारिद्र्यान्मोचयतीति भावः। तथा च श्रूयते "अग्ने रेतश्चन्द्रं हिरण्यम्" i "त्वामग्ने वसुपतिं वसूनाम्" j इति। स्मर्य्यते च "भूमिं स्पृष्ट्वाऽसृजद् धातून् पृथक् पृथक्" k इति।

६ वेदोनित्यमित्यादि। नास्तिकतादूरीकरणार्थं भगवाञ्शङ्कराचार्यः संन्यासिसम्प्रदायं मठचतुष्टयञ्च चकार। स दिग्विजयावसाने तु स्वकार्यं सिद्धप्रायं दृष्ट्वा तत्सम्प्रदायं वेदोदितकर्मानुष्ठानेऽनुज्ञातवान्। ततस्तेन गोरक्षणं होमादिकं च कर्तव्यम्, नो चेत् तस्येदानीं नास्ति पूर्ववत् प्रयोजनम्। ये पुनरत्याश्रमिणस्तेषां कृते न मठाम्नायः किन्तु वेदविहितारण्यकमार्ग एवेति ज्ञेयम्।

---

(a) ऋग्वेदसंहिता १–१–१. (b) ऋग्वेदसंहिता १–१–३. (c) ऋग्वेदसंहिता २–१–७. (d) ऋग्वेदसंहिता १०–८०–४. (e) ऋग्वेदसंहिता ४–५५–८. (f) ऋग्वेदीयखिलसूक्तान्तर्गत श्रीसूक्त (खिलसूक्त ८–१.) (g) श्रीशङ्करभगवत्पादाचार्याणामन्तिमोपदेशो साधनपञ्चकम् १.) (h) ब्रह्मानन्दगिर्याख्यायां गीताव्याख्यां श्रीवेङ्कटनाथः ३–१६. (i) तैत्तिरीयब्राह्मण १–२–१–४. (j) ऋग्वेदसंहिता ५–४–१; तैत्तिरीयसंहिता १–४–४६–२. (k) महाभारत वनपर्व २२२–१३.

नाद्राजंस्तप एवानुपश्यति ॥ ” a “ अग्निना तपोऽन्वभवत् ” b इत्यादि । अस्मान् सर्वान् जनान् । अग्न्युपासक आत्मवत् समस्तमपि जगत् सुखेन संयोजीयतुं कामयत इति बहुवचनेन ध्वनितम् । सुपथा ७ शोभनेन मार्गेण धर्माविरुद्धेनोभयत्र हितेन वर्त्मना । तादृशीं सुबुद्धिं प्रयच्छ यया धनं धर्मश्चोभयमप्यविरोधेन सम्पद्यते “ अग्निर्मेधां दधातु मे ” c इति श्रुतेः । कथमग्निः सुपथा नयने शक्त इति चेदाह—विश्वानि देव वयुनानि विद्वानिति । हे देव हे स्वयंप्रकाशज्ञानस्वरूप, विश्वानि सर्वाणि—अस्माकं विदिताविदितानि, वयुनानि कर्माणि “ वयुनमिति कर्मनामेति निघण्टूक्तेः ” d “ वयुनानि कर्माणि प्रज्ञानानि वा ” e इत्याचार्योक्तेश्च । शुभाशुभानि सुखदुःखफलप्रदानीत्यर्थः । यद्वा वयुनानि प्रज्ञानानि “ वयुनमिति प्रज्ञानामेति निघण्टुः ” f तथाच—अनेनैतदनुष्ठितमिदमनुष्ठेयमेतल्लब्धमिदञ्च लब्धव्यमिति—यदेतज्ज्ञानमस्ति तद्विद्वानित्यर्थः सम्पद्यते ” g । विद्वान् जानन्; त्वं जानासीति भावः ।

---

७ सुपथेति । “ ऋक्पूरब्धूःपथामानक्षे ” h इति समासान्तप्रत्ययस्तु न भवति “ न पूजनात् ” i इति निषेधात् ।

---

( a ) महाभारत शान्तिपर्व २९५-१२. ( b ) कठसंहिता चरकशाखा ३५-१५,. तैत्तिरीयसंहिता ७-३-१४-१,. तैत्तिरियब्राह्मण ३-८-१७-३. ( c ) अथर्ववेदसंहिता १९-४३-१. ( d ) ईशावास्योपनिषद्भाष्ये अनन्ताचार्यः १८. ( e ) ईशावास्योपनिषद्भाष्ये शङ्कराचार्यः १८. ( f ) निरुक्ते महर्षियास्कः ३-९. ( g ) ऋग्वेदभाष्ये सायणाचार्यः १-१८९-१. ( h ) पाणिनीयाष्टाध्यायी ५-४-७४. ( i ) पाणिनीयाष्टाध्यायी ५-४-६९.

चराचरस्य गतिप्रवृत्त्यादेरग्निकार्यत्वात् कर्मफलस्यापि गतिप्रवृत्त्यादिकमग्निकार्य्यमेव ८ । अतःकर्मफलरूपपुनर्जन्मादेः प्रव-

८ अग्निकार्यमेवेति । अत्राग्निसूर्य्ययोरभेदोऽनुसन्धेयः । श्रूयते च "अयमग्निरर्कः" a "दिवस्परि प्रथमं जज्ञे अग्निः" b "स एषोऽग्निर्दिवि श्रितः सौरः" c "अग्निः पूर्वरूपम् आदित्य उत्तररूपम्" d "मित्रोऽग्निर्भवति यत् समिद्धः" e "असौ वा आदित्योऽग्निर्वैश्वानरः" f इत्यादि । स्मर्यतेऽपि "अग्नये आदित्यं गृह्णामि" g "सूर्याग्निचन्द्ररूपेण तत् त्रिधा जगति स्थितम्" h इत्यादि । तस्मात् सुपथा नयनं कर्मफलविज्ञानं पापप्रक्षालनं लोकान्तरे फलप्रदानादिकं च यदग्नेः कार्यं प्रसिद्धं तत् समस्तमपि सूर्यस्यापीति ज्ञेयम् । श्रुतिरप्यस्ति ( सुपथा नयने ) "मित्रो नयतु विद्वान्" i "रथीर्ऋतस्य नो भव" j "वयमु त्वा पथस्पते रथं न वाजसातये धिये पूषन्नयुज्महि" k "विपथो वाजसातये चिनुहि वि मृधो जहि साधन्तामुग्र नो धियः" l "धियो यो नः प्रचोदयात्" m इत्यादिः । तथा ( कर्मफलविज्ञाने ) "वि होत्रा दधे वयुनाविदेकः" n "स्वस्ति नः पूषा विश्ववेदाः" o "विश्वा हि माया अवसि" p "पश्यन् जन्मानि सूर्य्य" q इत्यादिः । तथा ( पापप्रक्षालने ) "विश्वानि

( a ) बृहदारण्यकोपनिषत् १–२–७. ( b ) ऋग्वेदसंहिता १०–४५–१ (c) मैत्रायणीयोपनिषत् ६–२. ( d ) तैत्तिरीयारण्यक ७–३–२, तैत्तिरीयोपनिषत् १–३–२, ( e ) ऋग्वेदसंहिता ३–५–४. ( f ) श्रुतिरिति निरुक्तोक्तम् ७–२३. ( g ) आपस्तम्बीय श्रौतसूत्र ६–५–६. ( h ) मत्स्यपुराण. ( i ) ऋग्वेदसंहिता १–९०–१; सामवेदसंहिता पूर्वार्चिक २१८; ऐतरेयब्राह्मण ६–६–२. ( j ) ऋग्वेदसंहिता ६–५५–१. ( k ) ऋग्वेदसंहिता ६–५३–१. ( l ) ऋग्वेदसंहिता ६–५३–३. (m) ऋग्वेदसंहिता ३–६२–१०. ( n ) ऋग्वेदसंहिता ५–८१–१. ( o ) ऋग्वेदसंहिता १–८९–६. ( p ) ऋग्वेदसंहिता ६–५८–१. (q) ऋग्वेदसंहिता १–५०–७.

त्तकोऽग्निरेव। तथा च कर्मफलप्रवर्त्तकत्वात् स एव वेत्ति कस्य कर्म्मणः किं फलं किंच कर्म शुभं किं वाऽशुभमिति। अत एव स वयुनावित्

देव सवितु(त)र्दुरितानि परा सुव" a इत्यादिः। पुनः (फलप्रदाने) "आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुञ्च। अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथ एतैरेव रश्मिभिरूर्ध्वमाक्रमते" b "तं नयन्ति एताः सूर्य्यस्य रश्मयः" c "एष सविताख्यो यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादयः सूयन्ते अथैभ्यः सर्वमिदममुत्र वा यत्किञ्चिच्छुभाशुभं दृश्यते ह लोके तदेतेभ्यः। तस्मादादित्यात्मा ब्रह्म"d "मित्रो जानन् कल्पयाति प्रजानन्" e इत्यादिः। तथा स्मृतिरप्यस्ति "पूष्णे पथिकृते धात्रे विधात्रे" f "पूष्णे जातिविदे स्वाहा" g इत्यादिः। किञ्च यथाऽग्नेरुपासनेन ब्रह्मैवोपासितं भवति तथाऽग्निसूर्ययोरभेदे सति ब्रह्मसूर्ययोरप्यभेदात् सूर्य्योपासनेनापि ब्रह्मोपासनं भवति ब्रह्मज्ञानञ्चानुसङ्गिकमेव। श्रूयते च "आदित्यो ब्रह्मेत्यादेशः" h "य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा" i "यश्चायं पुरुषे यश्चासावादित्ये स एकः" j "यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एकः" k इत्यादि। एवं च सति सूर्य्योपासनाप्यग्न्युपासनायामन्तभूर्ता भवत्येव। ततश्च सूर्योपासकैरग्न्युपासनमपि कर्त्तव्यमेव। तथा च श्रुतिः "अग्नौ मित्राय हविराजुहोत" l इति, "मित्राय हव्यं घृतवज्जुहोत" m इति च।

(a) ऋग्वेदसंहिता ५-८२-५. (b) छान्दोग्योपनिषत् ८-६-२, ५. (c) मुण्डकोपनिषत् १-२-५. (d) मैत्रायणीयोपनिषत् ६-१६. (e) तैत्तिरीयब्राह्मण ३-७-२-३. (f) शाङ्खायनगृह्यसूत्र २-१४-९. (g) कौशिकसूत्र ७८-१०. (h) छान्दोग्योपनिषद् ३-१९-१ (i) महानारायणोपनिषव २३-१. (j) तीत्तैरियारण्यक ८-८-५; तैत्तिरीयोपनिषत् २-८-१. (k) मैत्रायणीयोपनिषत् ६-१७ (l) ऋग्वेदसंहिता ३-५९-५; तैत्तिरीयब्राह्मण २-८-७-६. (m) ऋग्वेदसंहिता ३-५९-१.

विश्ववेदा जातवेदा १ इति चाख्यायते । तथाच श्रूयते "अग्निरसि जन्मना जातवेदाः " a " अग्निर्जन्मानि देव आ वि विद्वान् " b " अग्निर्जाता देवानामग्निर्वेद मर्त्तानामपीच्यम् c " इत्यादि । ततश्च स एवैकोऽस्माकं सुपथा नयने शक्तः सर्व्वप्रथमं प्रार्थनार्हश्च । किञ्च जुहुराणम् कुटिलं दृढवेष्टनकरं बन्धनात्मकमिति यावत्; बहुकालसंचितमत एव बलवत्तरं तव साहाय्यव्यतिरेकेणास्माभिर्दुरपनेयमित्यभिप्रायः । एनः पापम्; यदिह लोके कुपथं नयति परलोके च दुःखं ददाति यच्च मानवजीवनं विफली करोति तत्; ' मा गृधः कस्यस्विद्धनम् ' इत्यादिना निषिद्धां परधनपरदारादिषु प्रवृत्तिमित्यर्थः । अस्मत् अस्मत्तः सर्वेभ्यो जनेभ्य इत्याशयः । युयोधि वियोजय पृथक् कुरु—इहैव शोकदुःखादिदानेन पश्चात्तापादिदानेन च निःशेषं निवर्त्तयेत्यर्थः । यथा बाह्यतापदानेन सुवर्णादिधातुगतमलशोधनत्वमग्नेः सर्वजनविदितं तथाऽन्तस्तापदानेन मनोगतपापशोधनत्वत्वमपि तस्यैवाग्नेरिति च ज्ञेयम्; अतस्तमाहुः पावक इति । तदुक्तम्, " अग्निं हृदय्यं शोकम् " d " अग्निर्दहतु दुश्चितम् " e " अग्नि-

१ जातवेदा इति । जातानि जन्मानि कर्म्मफलानि वेत्ति इति जातवेदा अग्निः । तथा च श्रुतिः " अग्निर्जाता देवानामग्निर्वेद मर्त्तानामपीच्यम् " f इति ।

(a) ऋग्वेदसंहिता ३–२६–७. (b) ऋग्वेदसंहिता ७–१०–२. (c) ऋग्वेदसंहिता ८–३९–६. (d) अथर्ववेदसंहिता ६–१८–१. (e) अथर्ववेदसंहिता १२–५–६१. (f) ऋग्वेदसंहिता ८–३९–६.

वैश्वानरोऽपहन्तु पापम् " a " अपबाधतां दुरितानि विश्वाः " b " पाहि नोऽग्न एनसे " c " अग्निहोत्रं जुह्वानो लोभजालं भिनत्ति " d " पावकः १० सुयज्ञो अग्निः " e " इत्यादि। ततः ११ विशुद्धा वयं सिद्धिं प्राप्स्याम इत्यभिप्रायः। एतदर्थं भूयिष्ठाम् बहुतमाम् असंख्यामित्यर्थः, ते तुभ्यम् अग्नये, नम उक्तिम् नमस्कारवचनम्, विधेम कुर्य्याम। 'अग्नये' इतिपदेन 'नमः' इति पदं विधिपूर्वकं योजयेम। 'अग्नये नमः' १२ इति मन्त्रेण त्वां यथाविधि परिचरेम—यथोक्तफललाभार्थं मार्गदेवं नेतारं त्वां प्रसादयेम—इति भावः। तथाचोक्तम् " अग्नीमीडे

१० पावक इति। पावकः अस्मदीयपापशोधकः—इति सायणः f।

११ तत इति। यतो मन्त्रसिद्धिश्चित्तशुद्धिमपेक्षते ततोऽग्रे चित्तशुद्धिं विधाय पश्चान्मन्त्रयोग उपदिश्यते इत्यभिप्रायः। तथा च स्मर्य्यते " जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्। मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने॥ " g इति।

१२ अग्नये नम इति। मन्त्रोऽयं सकामे निष्कामे च कर्मण्युपयुज्यते, अतः केवलं सकामे निष्कामे वा कर्म्मण्युपयुक्तानां मन्त्राणामपेक्षया श्रेष्ठत्वेनात्र गृहीतः। स्वाहाशब्दं विहाय नमः शब्दोपादानन्तु सर्वसाधारणजनाधिकारद्योतनार्थम्। " यावज्जीवमग्निहोत्रं जुहुयात् " h इति श्रुत्या सर्वसाधारणस्य कृते घृतहवनपूर्वकमग्निनमस्कारो विहितः। " तद्ध स्मैतत्पूर्वे विद्वांसोऽग्निहोत्रं न

(a) मानवगृह्यसूत्र २-८-६. (b) मैत्रायणीयसंहिता १-२-३. (c) तैत्तिरीयारण्यक १०-५; महानारायणोपनिषत् ७-४. (d) मैत्रायणीयोपनिषत् ६-३८. (e) ऋग्वेदसंहिता ३-१७-१. (f) ऋग्वेदभाष्य ३-१७-१. (g) तन्त्रसारे शिववचनम् १-३६०. (h) टीप्पणं द्रष्टव्यं द्वितीयमन्त्रेऽष्टमपृष्ठे।

पुरोहितं यज्ञस्य देवम्.... ईडे अग्निं नमोभिः" a "अग्नये नमः" b "नमोऽग्नऽये" c "अग्निमीडे वपूचित्तिं नमोभिः" d

जुहवाञ्चक्रुः" e इति श्रुत्या तु ज्ञानिनः कृते अग्निहोत्रनिषेधनं न विधीयते तत्र विधिप्रत्ययस्याप्रयोगात्। नैषा ऋग् विधानरूपा किन्तु इतिहासरूपा। केचिदेवं कुर्व्वन्ति स्म तेषां तन्न वेदविधिरित्यर्थवादः। तथा च श्रुत्यन्तरे निर्वचनम् "अग्निं धीभिर्नमस्यत" f इति। ज्ञानोत्तरकालेऽपि दैवकृतविघ्ननिवृत्तिपूर्वकजीवन्मुक्तिलाभार्थं लोकनियमनार्थञ्च ज्ञानिनोऽप्युपासना विधेया। अत्र स्मृतिर्भवति "ज्ञानवान् विप्रो देवानां दुःखदो भवेत्........। त्रिदशास्तेन विघ्नन्ति प्रविष्टाऽविषयं नृणाम्॥" g इति, "स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयम्भुवा" h इति च। श्रुतिरपि भवति "देवाः.........घ्नन्ति पुरुषस्य कामान्। तेभ्योऽहं भागधेयं जुहोमि" i इति। तथाऽग्निनमस्कारेणाग्निविद्याप्रकटयितार ऋषयोऽग्नावाविर्भवन्तो देवाश्च सर्वे नमस्कृता भवन्ति। तदुक्तम् "अग्न इडा नम इडा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वोऽस्तु देवेभ्यः" j "नमस्कारप्रयुक्तेन तेन प्रीयन्ति देवताः" k इत्यादि। अथ ये सकामाः पुत्रवित्ताद्यर्थिनस्ते यथाविध्यग्निमुपासते चेत् स्वाभिष्टं लभन्ते। तथा च श्रूयते "अय-

(a) ऋग्वेदसंहिता १-१-१,. ५-६०-१. (b) कठसंहिता चरकशाखा ११-१-६,. मानवगृह्यसूत्र २-१२-३. (c) शुक्लयजुर्वेद माध्यन्दिनसंहिता २३-१३,. शतपथब्राह्मण १३-२-७-७,. तैत्तिरियारण्यक १०-१-१२. (d) शुक्लयजुर्वेद माध्यन्दिसहिता १३-४३. (e) कौषीतकिब्राह्मणोपानिषत् २-४. (f) सामवेदसंहिता २-८६६. (g) शिवगीता (पद्मपुराणान्तर्गता) १-११-१२. (h) महाभारत शान्तिपर्व ३२७-५०. (i) शतपथब्राह्मण १४-९-३-१; वृहदारण्यकोपनिषत् ६-३-१ (j) ऐतरेयारण्यक १-१; आश्वलायनश्रौतसूत्र ८-१४-१८. (k) महाभारत अनुशासनपर्व १००-९.

"अग्निरसि वैश्वानरो नमस्तेऽस्तु मा मा हिंसीः" a इत्यादि । भूयिष्ठामित्येतेनाग्निचर्यायां मन्त्रजपमार्गो विहितः । विधिपूर्वकजपेन च

माग्निः सुवीर्य्यस्येशे महः सौभगस्य । राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ " b " अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः । दधाति रत्नम् " c " अग्निना रयिमश्नवत्...... यशसं वीरवत्तमम् " d इत्यादि । पुनश्च ये पित्रादिसुखवञ्चिता गृहकलहादिदग्धा वा तेऽपि विधिवदग्न्युपासनेनैव शान्तिमतितराम् प्राप्नुवन्ति । श्रूयते च " अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित् सखायम् " e " अग्ने वन्दे तव श्रियम् " f " त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् " g " त्वं जामिर्जनानामग्ने मित्रोऽसि प्रियः । सखा सखिभ्य ईड्यः ॥ " h " शं नो अग्निः " i " त्वं तमग्ने अमृतत्व उत्तमे मर्त्तं दधासि श्रवसे दिवे दिवे " j " ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति " k इत्यादि । किञ्च ये रोगाभिभूताः शत्रुनिगृहीता वा तेऽप्यग्न्युपासनेनैव स्वस्थतां विन्दन्ति । तथा च श्रुतिनिर्वचनानि " अग्निर्ददातु भेषजम् " l " त्वं भिषग् भेषजस्यासि कर्त्ता " m " अग्ने यन्मे तन्वा ऊनं तन्म आपृण " n " विषेण भङ्गुरावतः प्रति ष्म रक्षसो दह । अग्ने तिग्मेन शोचिषा तपुरग्रा-

(a) लाट्यायनश्रौतसूत्र ९-२५-१,. कठसंहिता चरकशाखा २-१३. (b) ऋग्वेदसंहिता ३-१६-१; सामवेदसंहिता १-९०; सामविधानब्राह्मण २-८-१. (c) ऋग्वेदसंहिता ४-१२-३. (d) ऋग्वेदसंहिता १-१-३. (e) ऋग्वेदसंहिता १०-७-३. (f) ऋग्वेदसंहिता ५-२८-४. (g) ऋग्वेदसंहिता ६-१-५. (h) ऋग्वेदसंहिता १-७५-४. (i) ऋग्वेदसंहिता ७-३५-४. (j) ऋग्वेदसंहिता १-३१-७ (k) कठोपनिषत् १-१-१७. (l) ऋग्वेदीयखिलसूक्त २८-१. (m) अथर्ववेदसंहिता ५-२९-१. (n) शुक्लयजुर्वेदसंहिता ३-१७; कृष्णयजुर्वेदसंहिता १-५-५-४; शतपथब्राह्मण २-३-४-१९.

प्राणायामः स्वत एव जायते तेन च सर्वसिद्धिरुपजायते। उक्तश्च "अग्न्युक्थमनुजपः" a "जपात् सिद्धिः" b "प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते" c "यस्माद्देवो जगन्नाथः कृत्वा मन्त्रमयीं तनुम्। मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥" d इति।

---

भिर्ऋष्टिभिः ॥ " e "अग्निर्देवानां सेनानीः" f इत्यादीनि। एवमायुर्वेदधनुर्वेदावप्यग्न्युपासनेनैव लब्धौ। ततश्चार्त्तादीनां सर्वेषामग्निरुपास्यः। ये पुनर्दैवविडम्बिता दारुणदुःखानलदग्धहृदयाः शोकोपहतबलबुद्धित्वात् किंकर्त्तव्यविमूढाः सन्तो गतजिजीविषा आत्मघातचिन्ताक्रान्ता भवन्ति तेषां नष्टचित्तोद्धाराय यावज्जीवं कर्तव्यताप्रापकोऽग्निरेकः कल्पते,. अत एव कुर्वन्नेवाग्निहोत्रादीनि जिजीविषेदिति विधीयते। अथ यदुक्तं तत्सर्वं श्रुत्यारूढं क्रियते "स यः कामयते महत् प्राप्नुयामिति……व्रती भूत्वा…… अग्निमुपसमाधाय परिस्तीर्य्यावृताज्यं संस्कृत्य……मन्थं संनीय जुहोति–यावन्तो देवास्त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्य कामान्, तेभ्योहं भागधेयं जुहोमि ते तृप्ताः सर्वैः कामैस्तर्पयन्तु…………तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा" g इति। स्मृतावप्येवमुक्तं h देवानां नामकथनपूर्वकम्। तथा सामवेदेऽपि अपशकुनादिसूचितामङ्गलनिवारणार्थमापतितदुर्दैवशान्तिकरणार्थञ्चाग्निहोत्रमेव मुख्यत्वेन विहितम् i।

---

(a) कौषीतकिब्राह्मण १९–४,. शाङ्खायनश्रौतसूत्र ९–२५–१. (b) आगमशास्त्रे प्रसिद्धं शिववचनम. (c) सुरेन्द्रसंहिता। कुलमुक्तिकल्लोलिनीतन्त्रे (साधनकथनप्रकरणे) लिखितम् (d) जयासंहिता। स्पन्दप्रदीपिकायां लिखितम्. §५२ (e) ऋग्वेदसंहिता १०–८७–३. (f) ऐतरेयब्राह्मण १–४, (g) शतपथब्राह्मण १४–९–३–१; बृहदारण्यकोपनिषत् ६–३–१ (h) मानवगृह्यसूत्र २–१४–२९. (i) अद्भुतब्राह्मण (सामवेदीय) [illegible]

तत्र चाग्निः सशिखः १३ उष्णप्रकाशप्रतीक एवाभिप्रेतः " त्व-

१३सशिख इति।यथाऽग्निःसशिखस्तथा तदुपासकेनापि(सशिखेन) भाव्यम् । आर्याणां शिरसि केशशिखाया धारणम्, अग्निशिखाऽनुकारं मन्दिराणां निर्माणं चैतदेव ज्ञापयति । तत्र मन्दिरविशेषेषु योनिरूपकुण्डगतघृतप्रज्वालितस्याग्नेर्निरन्तरमनिर्वापं रक्षणाय तदुपरि घृतपात्रेभ्यः क्षरणशीलस्य घृतस्य धारा अधःस्थिताग्नौ पतन्ति स्म । तदेषा श्रुतिर्भवति " पूर्णं नारि प्रभर कुम्भमेतं घृतस्य धाराममृतेन सम्भृताम् " a इति " घृतस्य धारया यजे " b इति च । ( प्रकृष्टयागेषु प्रयागादिक्षेत्रेषु घृतपूर्णकुम्भानां निर्दिष्टकाले संग्रहविधिरासीत् स एव प्रकृतं कुम्भपर्व )। घृतादिसम्पादनार्थं बहवो धेनवो वृषभाश्च मन्दिरेषु मन्दिरेषु गृहेषु गृहेषु च पालिता आसन् । गावो यज्ञस्थले स्वयमागत्य क्षीरं दुहन्ति स्म । श्रूयते च " गावो धेनवो बर्हिष्यदब्धा आ यत् सद्मानं दिव्यं विवासान् " c इति । धेन्वादयो देवपितृक्रियार्थत्वेन पूज्यत्वादवध्या अभूवन् । तथा चोक्तम् " मा गामनागामदितिं वधिष्ट " d " मा गामनागामदितिं वधिष्ट; पिबतूदकं तृणान्यत्तु; ओमुत्सृजत । " e " पिबतूदकं तृणान्यत्तु । ओमुत्सृजत । " f "अद्धि तृणमघ्न्ये" g इत्यादि । अत्र केचित् ' ओमुत्सृजत ' इत्यस्य ' अतिथये बलिं दद्यात् '

(a) अथर्ववेदसंहिता ३-१२-८. (b) शतपथब्राह्मण १४-९-३-१; बृहदारण्यकोपनिषत् ६-३-१. (c) ऋग्वेदसंहिता १-१७३-१. (d) ऋग्वेदसंहिता ८-१०१,-१५; कौशिकसूत्र ९२-१४. (e) तैत्तिरीयारण्यक ६-१२-१; छन्दोगमन्त्रब्राह्मण २-८-१४,१५,. मन्त्रपाठब्राह्मण २-१०-१०,११; हिरण्यकेशीयगृह्यसूत्र १-१३-१२,. मानवगृह्यसूत्र १-९-२३,. पारस्करगृह्यसूत्र १-३-२७, २८. (f) गोभिलगृह्यसूत्र ४-१०-१९ शाङ्खायनश्रौतसूत्र ४-२१-१४; लाट्यायनश्रौतसूत्र १-२-१३. (g) ऋग्वेदसंहिता १-१६४-४०; अथर्ववेदसंहिता ७-७३-१, ९-१०-२०; कौशिकसूत्र ९२-१४; कात्यायनश्रौतसूत्र २५-१-१९; आपस्तम्बीयश्रौतसूत्र ९-५-४, १५-१२-३.

मन्ये क्रतुभिः केतुभिर्हितः" a "ता सुजिह्वा उपह्वये" b.

इत्यर्थं कुर्वन्ति, तेन च गोमेधं विदधति। एतत्तेषां भ्रान्तिरेव, वस्तुतस्तु जलपानतृणादनार्थमरण्यं मोचयत इत्येवार्थः। यदुक्तम् 'घृतस्य धाराः' इति, तत्र वक्ष्यमाणान्यपि वेदवाक्यान्यनुसन्धेयानि "एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम्॥ सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः॥ सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः॥ अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥" c "असच्च सच्च परमे व्योमन् दक्षस्य जन्मन्नदितेरुपस्थे। अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः॥" d इत्यादीनि। अन्तिमश्रुतिस्थस्य 'दक्षस्य' इति पदस्यार्थो न दक्षप्रजापतेः, किन्तु समर्थस्य-घृताहरणकुशलस्य-इति "होता दक्षः" e "दक्षस्य स्वेन मन्युना" f इत्यादि श्रुतेः। तथा 'अदितेः' इत्यस्य द्यावापृथिव्योरित्यर्थो न तु ऋषिपत्न्या इति। "अदितिरिति द्यावापृथिवीनाम" इति निघण्टुः g। उपस्थे उपस्थाने, समीपे; द्यावापृथिव्योः सन्धिस्थले पूजादिकरणस्य विहितत्वात्। पूर्वे आयुनि काले, पूजादेः प्राक्। वृषभश्च धेनुः; तयोरायोजनं कर्त्तव्यमित्यभिप्रायः।

(a) अथर्ववेदसंहिता १३-३-२३. (b) ऋग्वेदसंहिता १-१३-८. (c) ऋग्वेदसंहित ४-५८-५, ६, ७, ८. (b) ऋग्वेदसंहिता १०-५-७ (e) ऋग्वेदसंहिता १-५९-४. (f) ऋग्वेदसंहिता १-१३९-२. (g) निरुक्ते महर्षियास्कः ३-२२.

" शुचिप्रतीकं तमया धिया गृणे " a " इत्यादिश्रुतिभ्यः ।

अत्र प्रसङ्गप्राप्तं लिङ्गोपासनविषयकमितिहासरहस्यं किञ्चिदुच्यते । मन्दिराणि विविधाकाराणि भवन्ति । तत्राग्निमन्दिराण्यग्निशिखाकृतीनि, लिङ्गमन्दिराणि च वाह्यतोपि लिङ्गवत् प्रतीयमानानि, तत्रापि देवीमन्दिराणि योनिपूजाप्राधान्याद् त्रिकोणाकाराणि निर्मीयन्ते । आर्य्यभूमेर्वहिर्गतानि मन्दिराणि स्वाकृतिभिर्लिङ्गोपासनमूलकत्वं प्रायः सूचयन्ति, आर्य्यभूमौ तु लिङ्गमन्दिराण्यपि अग्निमूलकत्वम् । एवं सति यदग्निशिखाकृतिमन्दिरेषु लिङ्गयोन्यादेः प्रतिष्ठापनं तत् कालेन जातम् । हेतुरत्र कस्यचित् कार्पण्यरोगोपहतस्य राज्ञः शासनं तथा ब्राह्मणानां वेदधर्म्मानुरागाभावः परस्परविरोधित्वं वेत्यनुमीयते । तथा " अबुध्यमानाः पणयः ससन्तु " b " दूरमित पणयो वरीय उद् गावो यन्तु मिनतीर्ऋतेन " c " पणिनेव गावः " d इत्यादिश्रुतिभ्यः, ' पणिर्वणिग् भवति 'इति निरुक्तेश्च प्रतीयते–गवामवमानकारिका पणिरखादिका पण्यद्रव्यवाहिनी वाणिज्यार्थं दूरदेशादागता गोघ्नेति विख्याताऽतिथिरूपा पणिनामिका असुरजातिरासीत् (इति सायणाचार्य्यः )–इति । सा च जातिर्दानपराङ्मुखा शिश्नोपासनायां रता चेत्यवगम्यते । श्रूयते च " मा शिश्नदेवा अपिगुर्ऋतं नः " e " शतदुरस्य वेदो घ्नञ्छिश्नदेवा अभिवर्पसा भूत् " f इति । तस्या एव धनलोलुपत्वं कृपणत्वञ्चानुकुर्वाणा अदानशीला आर्या अपि हेत्वन्तरं समभवन्निति चानुमीयते,अतएव वेदेषु सर्वानर्थकारणभूतानां कृपणानां निन्दाबाहुल्यं सर्वमङ्गलास्पदानां दातृणां स्तुतिबाहुल्यञ्च श्रूयते g । किञ्चाग्निमन्दिरेषु लिङ्गादिप्रतिष्ठापनं

( a ) ऋग्वेदसंहिता १–१४३–६. ( b ) ऋग्वेदसंहिता १–१२४–१० ( c ) ऋग्वेदसंहिता १०–१०८ ( तत्र सायणभाष्यं घ्यद्रष्टव्यम्, पणिर्गोघ्नः ) The beef-eating Panis ( Pan–worshippers. ) were the strangers ( Atithi ) in India called " Goghna " ( Lit. for whom cow is slaughtered. ( d ) ऋग्वेदसंहिता १–३२–११. ( e ) ऋग्वेदसंहिता ७–२१–५. ( f ) ऋग्वेदसंहिता १०–९९–३. ( g ) ऋग्वेदसंहिता १०–११७.

तीव्रविरोधाभावादनायासेनैव जातम्। क्षरणशीलघृतस्थाने जलसेचनं योन्याकृतेर्योनिनामिकाया वेद्या योनिपीठे परिणमनम् अग्निस्थाने लिङ्गप्रतिष्ठापनञ्च साहस्यवशातः शनैः शनैर्बहुभिराहृतम्। अनादित एवार्य्यानार्योभयेषु लिङ्गोपासकाः सन्ति। ते च द्वन्द्वोद्भूतसृष्टिवादिनोऽर्द्धनारीश्वरवादिनो हरगौरीपूजकाः प्रकृतिपुरुषोपासका वेत्यादिनाभिधीयन्ते। अत्र प्रमाणं व्यासदेवविरचितं लिङ्गपुराणम्। रामायणमहाभारतादौ चार्याणां स्वधर्म्माविरोधेन लिङ्गोपासनं दृश्यते। लोका अपि लिङ्गयोन्योः कायजननसामर्थ्यात् तत्र सृष्टिशक्तिं दृष्ट्वा तदुपासनपरायणा इति प्रसिद्धम्। किञ्च ज्ञानिनोपि ईश्वरास्तित्वचिन्हस्वरूपं तल्लिङ्गमास्तिकतावर्द्धकत्वात् सदैवानुमोदन्त आद्रियन्ते च। एतदर्थे श्रुतिरप्यस्ति "अस्तीति-ब्रुवतोऽन्यत्र कथं तदुपलभ्यते। अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः। अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति॥" a "अस्ति ब्रह्मेती चेद्वेद सन्तमेनं ततो विदुः" b इत्यादिः। स्मृतिरपि भवति "आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका। आलयः सर्वदेवानां लयनाल्लिङ्गमुच्यते॥ न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि। विद्यते सर्वशास्त्राणामेष एव सुनिश्चयः॥ विना लिङ्गार्चनं यस्य कालो गच्छति नित्यशः। महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः॥" c "आदौ लिङ्गं प्रपूज्य पश्चादन्यं प्रपूजयेत्। अन्यथा मूत्रवत् सर्वं शिवपूजां विना।" d इत्यादिः। एतेन सर्वेणानुमीयते लिङ्गोपासना नानाकारणसंयोगाच्छनैः शनैरग्न्युपासनास्थानमधिकृतवतीति। स्मर्यते च "रुद्रमग्निं द्विजाः प्राहुः" e "रुद्रमग्निम् उमां स्वाहा" f इत्यादि। लिङ्गोपासकाश्चेतिहासप्रामाण्याद् गां भगवतीं वृषञ्च महादेवं

(a) कठोपनिषत् ६–१२, १३. (b) तैत्तिरीयारण्यक ८–६; तैत्तिरीयोपनिषत् २–६. (c) स्कान्दपुराण। शब्दकल्पद्रुमे (S. V. लिङ्ग) लिखितम्. (d) लिङ्गार्चनतन्त्र १. (e) महाभारत वनपर्व २२९–३७. (f) महाभारत वनपर्व २२८–५

मन्यमानास्तौ पूज्यत्वेनावध्यौ स्वीकृतवन्तः । तथापि यथाऽग्नि-पूजायां घृतादेः प्रभूतप्रयोजनं भवति न तथा लिङ्गपूजायाम्, इत्यतोऽग्न्युपासनेव न लिङ्गोपासना गोरक्षणाय कल्पते स्म । घृतस्य प्रयोजनाद् यज्ञाग्निरेव 'गोवृषध्वजः' इत्याख्यामर्हति । स्मर्यते च "ऋषीणामग्निहोत्रेषु गावो होमे प्रतिष्ठिताः" a इति । गोरक्षणाभावे देवपितृकर्मलोपाद् ब्रह्मतेजो लुप्तं जातम्, तस्मिल्लुप्ते ब्राह्मणा अपि लुप्ता एव । तथाच परस्परसम्बद्धयोर्ब्राह्मणक्षात्रिययोरेकतरस्य लोपेऽन्यतरस्यापि लोपः सुतरां सम्पन्नः । क्षत्रियस्य लोपे वीर्याभावादार्या अनार्यैः पराभूताः, ततश्चार्य्याणामधःपातोऽनार्याणामभ्युदयश्च संवृत्तः । एवमग्न्युपासनात्यागादनन्तरमार्यभूमेरार्यधर्मस्य च महती दुर्दशा सञ्जाता न तत्पूर्वम्; तदा तु महत् सौभाग्यमासीत् । गोब्राह्मणहितोऽग्निरेव विधिनोपासितः सन् आर्याणां देवताऽऽनुकूल्यकारी राज्यधर्मादिरक्षको युद्धजयादिसर्वसौभाग्यप्रदश्चासीत् । तदुक्तम् " अग्ने वैश्वानर विश्वैर्मा देवैः पाहि स्वाहा " b " अग्ने वरेण्यं कुरु " c " अग्निर्देवानां सेनानीः " d " अग्ने वर्चस्विन् वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूयासम् " e " अग्निस्तेजसा तेजस्वान् " f " अग्ने यत्ते तेजस्तेन तमतेजसं कृणु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः " g " क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः अग्ने सुवीर एधते " h इत्यादि । अत एव व्ययादिबाहुल्यभयेनाग्निचर्यापराङ्मुखत्वं न कदापि श्रेयस्करम् । तत्राप्येष वेदानामादेशो भवति " यज्ञेन वर्द्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा " i

( a ) पद्मपुराण । ( b ) अथर्ववेदसंहिता २-१६-४. ( c ) ऋग्वेदसंहिता ६-१६-३३. ( d ) ऐतरेयब्राह्मण १-४. ( e ) शुक्लयजुर्वेद माध्यन्दिनसंहिता ८-३८. शतपथब्राह्मण ४-५-४. ( f ) मैत्रायणीयसंहिता. २-७-१७. ( g ) अथर्ववेदसंहिता २-१९-५ ( h ) ऋग्वेदसंहिता ८-८४-९. ( i ) ऋग्वेद-संहिता २-२-१.

शिखा च पुनर्घृतेनैव १४ प्रज्वालिता प्रशस्ता । तथाच श्रूयते "अग्नेः प्रियं धाम यद् घृतम्" [a] "अग्ने घृतेनाहुत" [b] "अग्निं घृतप्रियम्" [c] "घृतं मे चक्षुः" [d] "घृतनिर्णिक् स्वाहुतः" [e] "घृतमस्य योनिः" [f] "घृतप्रतीकः व्यद्यौत दग्निः" [g] इत्यादि। अग्नौ हुतस्य घृतस्य कांश्चित्सूक्ष्मांशानग्नि-र्देवपितृभ्यो वहति,. ते च तानेवादन्ति,. तेन च हेतुना देवा यज्ञा-ग्निना मर्त्यलोके आकर्षिता भवन्ति—वहनादेवाग्निदेवं वह्निरि-त्याचक्षते—अतश्च तस्य घृतप्रज्वालितत्वं प्रशस्तम् । तथा चो-क्तम् "घृतस्य नाम गुह्यं यदस्ति जिह्वा १५ देवानाममृतस्य नाभिः" [h] "अवसृजा वनस्पते देव देवेभ्यो हविः" [i] "अग्ने

---

"अग्निं समाधेहि" [j] "अग्निं साम्राज्याय" [k] "स्वाराज्यकामो यजेत" [l] इति।

१४ घृतेनैवेति। "अग्ने तैलस्य प्राशान" [m] इति श्रुतेस्तैलेनापि शिखा प्रज्वालयितुं शक्या; परन्तु तैलेनापदेवता घृतेन देवताः प्रिण्यन्ते,-इति घृतेनैव प्रज्वालिता प्रशस्ता। केचन वससाऽपि तैलकार्यं कुर्वन्ति।

१५ जिह्वेति। जिह्वा वागिन्द्रियमित्यर्थः, अग्नौ घृतहवनद्वारा

---

(a) कठसंहिता चरकशाखा २२-७. (b) अथर्ववेदसंहिता ६-५-१. (c) अथर्ववेदसंहिता १२-१-२०. (d) ऋग्वेदसंहिता ३-२६-७. (e) ऋग्वेदसंहिता ३-२७-५. (f) ऋग्वेदसंहिता २-३-११ (g) ऋग्वेदसंहिता ३-१-१८ (h) ऋग्वेदसंहिता ४-५८-१. (i) ऋग्वेदसंहिता १-२३-११. (j) मैत्रायणीयसंहिता १-५-१४; मानवश्रौतसूत्र १-६-३,१३. (k) मानवश्रौत सूत्र ६-२-५. (l) महाभारतव्याख्यायां नीलकण्ठसूरिः (गीता ३-८) श्रुतिरित्याह. (m) अथर्ववेदसंहिता १-७-२.

यं यज्ञमध्वरं विश्वतः परिभूरसि स इद्देवेषु गच्छति" a "देवत्रा हव्यमोहिषे" b "वह्निरसि हव्यवाहनः" c "जातवेदसं वह्निं देवा अकृण्वत" d "हव्यवाहं पुरुप्रियम्" e "घृतनिर्णिक् स्वाहुतः अग्निर्यज्ञस्य हव्यवाट्" f "तं हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता। अग्निं हव्याय वोढवे॥" g त्वामग्ने ........देवा दूतं चक्रिरे हव्यवाहनम्........घृतयोनिम्" h "अग्निं मर्त्तास इन्धते हव्यवाहं घृतप्रियम्" i "देवानां हव्यवाहस्तु पितृणां कव्यवाहनः" j "अग्नये कव्यवाहनाय" k

देवानां मनुष्यैः सह कथनोपकथनसम्भवात्। यद्वाऽऽस्वादकजिह्वास्थानीयरसनेन्द्रियमित्यर्थः। एतेन घृतं न देवपितॄणां भोजनम्, किन्तु पुरोडाशादिभोजनसाधनमिति नाशङ्कनीयम्; इन्धने ह्याग्नौ प्रक्षिप्तेन घृतेनापि केवलेन हवनविधानात्। तथाच स्मृतिः "मोक्षकामस्तु गव्येन घृतेन प्रतिनामतः" l इति। अतः

(a) ऋग्वेदसंहिता १-१-४. (b) ऋग्वेदसंहिता १-१२८-६. (c) शुक्लयजुर्वेदसंहिता ५-३१,. कृष्णयजुर्वेदसंहिता १-३-३-१,. मैत्रायणीयसंहिता १-२-१२,. कठसंहिता २-१३; ताण्डीयाब्राह्मण १-४-५; लाट्यायनश्रौतसूत्र २-२-१६. (d) ऋग्वेदसंहिता ३-११-४. (e) ऋग्वेदसंहिता १-१२-२. (f) ऋग्वेदसंहिता ३-२७-५. (g) ऋग्वेदसंहिता ५-१४-३. (h) ऋग्वेदसंहिता ५-८-६. (i) अथर्ववेदसंहिता १२-१-२०. (j) गृह्यसंग्रहपरिशिष्टे गोभिलपुत्रः १-९. (k) शुक्लयजुर्वेदसंहिता २-२९; अथर्ववेदसंहिता १८-४-१७,. कठसंहिता चरकशाखा ९-६,. तैत्तिरीयब्राह्मण १-३-१०-३,. मन्त्रपाठब्राह्मण २-३-२,. शतपथब्राह्मण २-४-२-१३,. मानवश्रौतसूत्र १-१-२, १८,. खादिरगृह्यसूत्र ३-५-१२,. आपस्तम्बीयगृह्यसूत्र ८-२१-४,. गोभिलगृह्यसूत्र ४-२-३९,. हिरण्यकेशीयगृह्यसूत्र २-११-३,. जैमिनीयगृह्यसूत्र २-१-२. (l) स्कान्दपुराणे वेदसारशिवस्तोत्रम्, १८८.

इत्यादि। अग्निना प्रापितेन १६ हव्येन तृप्ता देवाः पितरश्च हृष्टा भवन्ति। तथा चोक्तम् "अग्ने.........त्वे विश्वे अमृता मादयन्ते" a "अत्र पितरो मादयध्वम्" b. इति। हृष्टाश्च ते होतॄणां सर्वविघ्नान्निवारयन्तः कल्याणं १७ कुर्वन्ति "यावन्तो

केवलमपि घृतं हव्यं कव्यञ्च। उक्तञ्च "हव्यमसि हव्यवाडसि" c "कव्योसि कव्यवाहनः" d इति।

१६ अग्निना प्रापितेनेत्यादि। अस्मिन्नेवार्थे ऋग्वेदस्य द्वादशत्रयोदशसूक्ते पर्य्यवसीयेते। अग्नौ तृप्ते सर्वेऽपि देवपित्रादयस्तृप्यन्तीति तात्पर्य्यम्।

१७ कल्याणमिति। यथा पशुभ्यो मनुष्याः श्रेष्ठास्तथा मनुष्येभ्यो देवपित्रादयः, अतस्ते मनुष्याणां हव्यकव्यादिदानेन तर्पणीयाः; तृप्ताश्च ते प्रभूतं कल्याणं कुर्वन्ति। श्रूयते च "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" e "अरमस्मै भवति यासहूतौ" f इति। स्मर्यतेपि "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।" g "ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः" h इति। तस्मात् सर्वैरन्नस्याग्रभागमग्नौ देवपितृभ्यो विधिवदनुदिनं

(a) ऋग्वेदसंहिता १–५९–१. (b) शुक्लयजुर्वेद माध्यन्दिनसंहिता २–३–१,. शुक्लयजुर्वेद काण्वसंहिता २–२–६,. शतपथब्राह्मण २–४–२–२०,. जैमिनीयश्रौतसूत्र १८,. द्राह्यायणश्रौतसूत्र ६–२–४,. लाट्यायनश्रौतसूत्र २–१०–४,. खादिरगृह्यसूत्र ३–५–१८,. गोभिलगृह्यसूत्र ४–३–११. (c) कठसंहिता चरकशाखा ४०–१२; आपस्तम्बीयश्रौतसूत्र १७–२२–२. (d) कठसंहिता चरकशाखा २–१३; मैत्रायणीयसंहिता १–२–१२; ताण्डीयब्राह्मण १–४–१४; आपस्तम्बीयश्रौतसूत्र ११–१५–१; लाट्यायनश्रौतसूत्र २–२–२५; शाङ्खायनश्रौतसूत्र १६–१२–९. (e) श्रुतिरित्याह ब्रह्मानन्दगिर्याख्यायां श्रीमद्भगवद्गीताव्याख्यायां (३–१२) वेङ्कटनाथः। (f) ऋग्वेदसंहिता १०–११७–३ (g) श्रीमद्भगवद्गीता ३–१२. (h) स्मृतिरित्याह श्रीमद्भगवद्गीताव्याख्यायां (३–१२) वेङ्कटनाथः।

देवास्त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्यकामान् । ते मे तृप्ताः सर्वैः कामैस्तर्पयन्तु " a " मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः " b " शं नो भवत्वर्य्यमा शन्न इन्द्रः " c " इत्यादि श्रुतेः । एतदेव 'यज्ञस्यमाया' यज्ञशक्तिर्वा मन्त्रबलं वेत्यभिधीयते । श्रूयते च " ये ते पाशा मृत्यो मर्त्याय हन्तवे तांस्ते यज्ञस्य मायया सर्वानवयजामहे " d इत्यादि । किञ्च ते देवपित्रादयो मन्त्रादिनाऽऽहूताः सन्तस्तत्राग्नावाविर्भवन्ति १८ । एतस्मादेव हेतोरग्निं देवानां दूतं देवमर्त्यानां

प्रदायावशिष्टं भोजनीयम् " नित्यमग्निं परिचरेदभुक्त्वा " e इति शासनात् । अन्यथा प्रत्यवायः स्यात् । तदुक्तम् " केवलाघो भवति केवलादी " f " तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः " g " भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् " h इत्यादि । न कदापि देवेभ्यो निकृष्टं दत्त्वा स्वयमुत्कृष्टं भुञ्जीत; " गुरुद्वेषो अररुषे दधन्ति " i " प्रीताः प्रीणन्ति सततं मानिता मानयन्ति च । अवज्ञातावधूताश्च निर्दहन्त्यधमाचिरान् " j इत्यादि श्रुतिस्मृतिवचनानुरोधात् ।

१८ आविर्भवन्तीति । यज्ञाग्नौ देवपित्रादेराविर्भावो भवति, " अग्निं प्रत्यक्षदैवतम् " k इतिश्रुतेः । तस्मात्तद्दर्शनकामोऽग्निमेव

(a) शतपथब्राह्मण १४-९-३-१,. बृहदारण्यकोपानिषत् ६-३-१. (b) ऋग्वेदसंहिता १-९०-६. (c) ऋग्वेदसंहिता १-९०-९. (d) कठसंहिता चरकशाखा ३८-१३,. तैत्तिरियारण्यक आन्ध्रशाखा १०-५-७,. तैत्तिरीयब्राह्मण ३-१०-८-२,. आपस्तम्बीयश्रौतसूत्र १६-१६-१,. कौशिकसूत्र ९७-८. (e) महाभारत अनुशासनपर्व ९७-७. (f) ऋग्वेदसंहिता १०-११७-६ (g) श्रीमद्भगवद्गीता ३-१२. (h) श्रीमद्भगवद्गीता ३-१३. (i) ऋग्वेदसंहिता ७-५६-१९. (j) महाभारत अनुशासनपर्व ९८-३७. (k) ऋग्वेदीयखिलसूक्त २८-६

मध्यस्थश्चामनन्ति । तथाच श्रुतिः " अग्ने देवाँ इहावह " a " स देवाँ एह वक्षति " b " अग्ने सुखतमे रथे देवाँ ईडित आ वह । असि होता मनुर्हितः ॥ " c " जुषस्व नः समिधं जातवेद आ च देवान् हविरद्याय वक्षि" d "सं दूतो अग्न ईयसे हि देवान्" e " अग्निर्देवानां दूतः " f "अग्निर्वै देवानां होता " g " अग्निंदूतं

यजेतेति श्रुतिस्मृत्योर्विधीयते। ततः सर्वदेवमयोऽग्निर्मुख्यतयोपास्यो विष्णोरपि श्रेष्ठ इत्याहुः । तथाच श्रूयते " "अग्निर्वैसर्वा देवताः" h "अग्निर्वै देवानामवमो विष्णुः परमः" i "यज्ञो वै विष्णुः" j इत्यादि। अग्न्युपासकानां देवतान्तरपूजने प्रयोजनं नास्ति, किन्तु देवतान्तर पूजकानामारार्त्तिकविधौ नियतमेवाग्निसत्कारोऽपरिहार्यः; अपि च योऽग्निं परित्यज्यान्यां देवतामुपास्ते सोपि तत्रैवाधिक्रियते " यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् " k इति श्रुतेः, " दैवतानि हि मान्यानि पुरुषेण विशेषतः, मा तात साहसं कार्षीः स्वधर्मं परिपालय " l इति स्मृतेश्च । एवं सनातनत एव देवपूजाया विधिरासीद्,.अत एव तत्तद्देवभक्तास्तत्तद्देवप्रतिमादिकं यजन्तेऽग्न्युपासकाश्चाग्निम् । " नतस्य प्रतिमास्ति यस्य नाम महद्यशः " m इश्रुतौ परमात्मनः प्रतिमाया अभावश्रवणात् प्रतिमा-

( a ) ऋग्वेदसंहिता १–१२–३,. सामवेदसंहिता २–१४२,. शुक्लयजुर्वेद संहिता १७–९,. कृष्णयजुर्वेदसंहिता १–३–१४–८,. अथर्ववेदसंहिता २०—१०१–३. ( b ) ऋग्वेदसंहिता १–१–२. ( c ) ऋग्वेदसंहिता १—१३–४. ( d ) ऋग्वेदसंहिता ५–४–४. ( e ) ऋग्वेदसंहिता ७–३—३. ( f ) तैत्तिरीयसंहिता २–५–८–५. ( g ) ऐतरेयब्राह्मण ३–१४. ( h ) ऐतरेयब्राह्मण १–१–४. ( i ) ऐतरेयब्राह्मण १–१–१. ( j ) तैत्तिरीयसंहिता १–७–४. ( k ) ऐतरेयब्राह्मण ३–११–८–१. ( l ) महाभारत वनपर्व १५०–२३, २५. (m) शुक्लयजुर्वेदसंहिता ३२–३, cf. ऋग्वेदसंहिता रावणभाष्यम् १०–७१–१० ( तत्र ' महद्यशः ' परमात्मेति द्रष्टव्यम् )

वृणीमहे " a " अग्निम्.......दूतमध्वरे........यो मर्त्त्येषु निध्रुविः " b " दूतो देवानामसि मर्त्यानामन्तर्महाँश्चरसि रोचनेन ". c " ताँ उशतो वि बोधय यदग्ने यासि दूत्यम्। देवैरासत्सि बर्हिषि ॥ " d " आ ग्ना १९ अग्न इहावसे होत्रां यविष्ठ भारतीम्। वरूत्रीं धिषणां वह ॥ " e इत्यादिः। यद्यपि घृतमात्रमग्न्याहुतं देवानां प्रियं तथापि गव्यमेव २० तेषां प्रियतमम्

रहितोपासनैव श्रेष्ठेत्यनुमीयते। तथापि परस्परं विरोधकरं वैमत्यं परित्यज्यैकमत्यस्थापनायैकविधमेवोपासनं विधेयम्, तच्च सर्वेषां सुकरत्वादग्निविषयकमेवेति वेदस्यादेशः। तदुक्तमृग्वेदस्यान्तिमसूक्ते " संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते ॥ " f इति; अथर्ववेदेपि " सहृदयं सांमनस्यमविद्वेषं कृणोमि वः, येन देवा न वियन्ति नो च विद्विषते मिथः; सम्यञ्चोऽग्निं सपर्य्यत अरा नाभिमिवाभितः, देवा इवामृतं रक्षमाणाः सायंप्रातः सौमनसो वोऽस्तु " g इति।

१९ ग्ना इति। 'ग्नाः देवपत्न्यः' इति सायणाचार्यः। एतेन देवा इव देव्योपि अग्निनैवाहूता आविर्भवन्तीत्युक्तं भवति। अत एव देवीभक्तास्तान्त्रिका अपि मन्त्रसिद्धिकामनया यथाविध्यग्नौ होमादिकं कुर्वन्तीति प्रसिद्धम्; तच्च प्रपञ्चसारे शङ्करभगवता विस्तारितम्।

२० गव्यमिति। गव्याभावेऽन्यघृतेनापि कार्यं निर्वहति। तदुक्तम् " अग्निघृतेभिराहुतः " h इति।

(a) ऋग्वेदसंहिता १-१२-१,. सामवेदसंहिता १-३,. शुक्लयजुर्वेदसंहिता २२-१७,. कृष्णयजुर्वेदसंहिता २-५-८-५,. अथर्ववेदसंहिता २०-१०१-१. (b) ऋग्वेदसंहिता ७-३-१. (c) ऋग्वेदसंहिता १०-४-२. (d) ऋग्वेदसंहिता १-१२-४. (e) ऋग्वेदसंहिता १-२२-१०. (f) ऋग्वेदसंहिता १०-१९१-२ (g) अथर्ववेदसंहिता ३-३०. (h) ऋग्वेदसंहिता ८-१९-२२.

"प्रतित्यं चारुमध्वरं गोपीथाय * प्रहूयसे" a इतिश्रुतेः; तथा जीवमात्रस्य तत्राग्रहातिशयदर्शनाद् ऋक्श्रुतौ गवां २१ प्रशंसा-बाहुल्यश्रवणाच्च—तथाहि "ऋतेन ऋतं नियतमीड आ गोः" b "ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः" c "त्वे धेनुः सुदुघा जातवेदः" d "देवांश्च याभिर्यजते" e "माध्वीर्गावो भवन्तु नः" f "अग्निहोत्राद्यर्था धेनवः" g इत्यादि । स्मृतावपि "ऋषीणामग्निहोत्रेषु गावो होमे प्रतिष्ठिताः । गावः स्वर्गस्य सोपानं गावः शरणमुत्तमम् ॥" h इति । गव्य-घृतमपि नवतरं समधिकफलप्रदम् "अग्निः स द्रविणोदा स्वाहुतो नवीयसा" i इति श्रुतेः । यथा घृतेषु गोघृतं प्रशस्तं तथाऽग्नि-ष्वपि २२ अरणिप्रमथनजनित एवाग्निः प्रशस्तः, ततश्चायमेव

२१ गवामिति । "गोषु ह्याप्यायितासु तत्सम्बन्धिक्षीरादिहवि-र्द्वारेणेन्द्र आप्यायितो भवति" इति सायणाचार्य्यः j । गवां गर्भमादधानस्य वृषभस्यापि पूजा श्रूयते "उपेदमुपपर्चनमासु गोषूप पृच्यताम् । उप ऋषभस्य रेतस्युपेन्द्र तव वीर्य्ये" k "गौर्मे माता वृषभः पिता मे दिवं शर्म्म जगती मे प्रतिष्ठा" l इत्यादि ।

२२ अग्निष्वपीति । अरणिप्रमथनजनितं केवलगोघृतप्रज्वा-

* गोपीथाय इत्यस्य कृते Peterson's Hymns from the Rig Veda Part 1. इदं द्रष्टव्यम् ।

(a) ऋग्वेदसंहिता १–१९–१. (b) ऋग्वेदसंहिता ४–३–९. (c) ऋग्वेदसंहिता १–७४–६. (d) ऋग्वेदसंहिता १०–६९–४. (e) ऋग्वेद-संहिता ६–२८–३. (f) ऋग्वेदसंहिता १–९०–८. (g) ऋग्वेदभाष्ये सायणाचार्यः १–९०–८. (h) पद्मपुराण. (i) ऋग्वेदसंहिता ८–३९–६. (j) ऋग्वेदभाष्य ६–२८–८. (k) ऋग्वेदसंहिता ६–२८–८. (l) श्रुति-रिति लिखितं महाभारतेऽनुशासनिके पर्वणि ७६–७.

घृतप्रज्वालकर्मणि ग्राह्यः । श्रूयते च " अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् " a " अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु । दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ " b " उत स्म यं शिशुं यथा नवं जनिष्ठारणी " c इत्यादि । तत्रापि घृतं नाग्नौ प्रक्षेपणीयं किन्तु घृते अग्न्याधानं कार्य्यम्—प्रमथनजनिताग्निं प्रज्वाल्य घृतपात्रञ्च तदुपरि संस्थाप्य पात्रस्थे उत्तप्ते घृते तद्‌घृतोत्थितेन धूमेनाकृष्याऽग्निराधेयः,. सोऽपि वर्त्तिकेन्धनादिसंयोगशून्यः केवलघृताश्रितप्रतिको विहितः । तथाच श्रूयते " घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम " d " घृतप्रतीकः अग्निः " e इति । इत्थं प्रज्वालितोऽग्निर्न भूगर्भे न चाकाशे संस्थाप्यः किन्तु द्यावापृथिव्योः सन्धिस्थले वेदिं २३ विधाय तत्र प्रतिष्ठापनीयः; प्रतिष्ठापनयन्त्रञ्च योन्याकृति त्रिकोणं विधातव्यम्; अन्यथाऽ-

---

लितमग्निम् 'अग्निः' इत्यामनन्ति तद्व्यातिरिक्तांस्तु 'अग्नयः' इति। एतदभिप्रेत्याग्निष्वपीति बहुवचनमुपात्तम् । अग्नीनामयमग्निः श्रेष्ठतमः । उक्तञ्च " अग्न आयाहि अग्निभिः " f " चारुमध्वरं गोपीथाय.........अग्न आगहि " g इति ।

२३ वेदिमिति । होमनिमित्ताग्निस्थापनार्थं परिष्कृतं स्थानं वेदिः । तस्या योन्याकृतित्वं सनातनतः प्रसिद्धम् । सैव योनिशब्देनापि आम्नायते । तथा च श्रुतिः " वेदिषदे प्रियधा-

---

(a) ऋग्वेदसंहिता ७-१-१. (b) ऋग्वेदसंहिता ३-२९-२. (c) ऋग्वेदसंहिता ५-९-३. (d) ऋग्वेदसंहिता २-३-११. (e) ऋग्वेदसंहिता ३-१-१८. (f) वैतानसूत्र ३९=८. (g) ऋग्वेदसंहिता १-१९-१.

ग्निनिर्वापसंभवात् " दक्षस्य जन्मन्नदितेरुपस्थे " a " वेदिषदे प्रियधामाय प्र भरा योनिमग्नये । शुचिं ज्योतीरथं शुक्रवर्णं तमोहनम् ॥ " b इत्यादिश्रुतेः । स चाग्निर्घृताहुतिक्रमेण निरन्तरं प्रज्वाल्यमान एव रक्षणीयः—स एव पशुवधादिहिंसारहितः २४ सन् यज्ञश्रेष्ठः २५ इति संगीयते । तथाच श्रुतिः

माय......प्रभरा योनिमग्नये " c " आ योनिमग्निर्घृतवन्तमस्थात् " d " अग्ने तव योनिं..........घृतवन्तमासदः " e इत्यादिः । तत्र प्रज्वालितघृतपात्रमपि तदाकारमेव भवितुमर्हति । अन्यथोपरिष्टात् पतन्तीभिर्घृतस्य धाराभिस्ताडितत्वाद् वर्त्तुलाकारपात्रस्थे घृते यावत्पात्रं तरङ्गिते सति अग्निर्निर्वापितः स्यात् । त्रिकोणाकारपात्रे तु कोणप्राप्तेः पूर्वमेव तरङ्गाणां भङ्गो भवति ततश्चाग्निरनिर्वापं तिष्ठति । एवञ्च योनिरूपायां वेद्यां लिङ्गरूपोऽग्निस्तदुपरि क्षरणशीलं जलमिव घृतमितिलिङ्गोपासनाग्न्युपासनयोः सौसादृश्यं विभाव्यम् ।

२४ हिंसारहित इति । ऋग्वेदे यो यज्ञीयो हिंसावादो दशस्वेवाप्तसूक्तेषूपलभ्यते f स नादरणीयस्तेषां सूक्तानां प्रक्षिप्तत्वात् ( इहान्यदनुसन्धेयम् ) । नान्यत्र कुत्रापि ऋग्वेदे यज्ञहिंसा दृश्यते प्रत्युताऽहिंसा तु दृश्यत एव; " अग्ने हेडांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च " g "सेतूंस्तर दुस्तरान् अक्रोधेन क्रोधम्" h इत्यादिश्रुतेः । यज्ञे पशुहिंसां दृष्ट्वैव पूर्णकरुणावतारो निखिलहृदयराजो भगवान् बुद्धदेवोपि वेदान्निर्वेदमापन्नोऽग्न्युपासनं तत्याज,

( a ) ऋग्वेदसंहिता १०–५–७. ( b ) ऋग्वेदसंहिता १–१४०–१. ( c ) ऋग्वेदसंहिता १–१४०–१. ( d ) ऋग्वेदसंहिता ३–५–७. ( e ) ऋग्वेदसंहिता १०–९१–४. ( f ) ऋग्वेदसंहिता १–१३,. १–१४२ १–१८८,. २–३,. ३–४,. ५–५,. ७–२,. ९–५,. १०–७०,. १०–११०. (g) ऋग्वेदसंहिता ६–४८–१०; सामवेदसंहिता २–९७४. (h) सामवेदसंहिता, छन्द आर्चिक ६–१–९.

वस्तुतस्तु सोऽप्यग्निमित्रयोरुपासक एवासीदिति बौद्धानामपि सम्मतम्। a उक्तञ्च "गौतमश्चार्कबन्धुश्च" b "शाक्यसिंहोऽर्कबान्धवः" c इत्यादि। समरे तु हिंसा ऋचि दृश्यते तत्र सम्मुखमरणं स्वर्गतिप्रदमिति गीयतेऽधर्मक्षयधर्मरक्षार्थं शत्रुवधादिकञ्चानुमोदते। श्रूयते च "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्याजः" d इति 'उत्तमेषु लोकेषु ते निवसन्ति' इति च तत्रैव सायणाचार्यः। श्रुत्यन्तराण्यपि भवन्ति "प्रति प्रतीचीर्दहतादरातीः" e "उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्रान्" f "त्वं दस्यूँरोकसो अग्न आज" g "धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम्" h "श्नञ्छिश्नदेवान्" i इत्यादीनि। अत एवार्या अधर्मपरायणान् शत्रूननार्यान् दस्युयातुराक्षसशिश्नदेवेत्यादिशब्दैराख्याय तैर्युध्यन्त स्म। तथा चोपनिषदोऽस्या ऋषिर्दधीचिरपि 'ततो न विजुगुप्सते' इतिमन्त्रपादेनाहिंसाधर्मस्य सर्वप्रथमोपदेष्टापि सन् वृत्रवधाय स्वदेहमपि स्वेच्छं त्यक्त्वा धर्मरक्षार्थं हिंसामेवानुमोदितवान्। इममेव हिंसावादं लक्ष्यीकृत्योक्तम् "अहिंसा साधुहिंसा" j इति। तथा 'मा गृधः कस्यस्विद्धनम्' 'कृतं स्मर' 'नय सुपथा' 'युयोध्यस्मज्जुहुराणमेनः' इत्यादिमन्त्रवचनानाम् अधर्मपापादिभ्यो जुगुप्सापरत्वेन हिंसापरत्वमस्यामेवोपनिषदि दृश्यते। इत्येतत्सर्वमभिप्रेत्योक्तम्-हिंसारहित-इति।

२५ यज्ञश्रेष्ठ इति। सर्ववेदानामुपक्रमे प्रथममग्निरेव पुरोहितरूपेणेड्यते। श्रूयते हि "अग्निर्देवता ऋग्वेदस्य" k इति। प्राचीनम्लेच्छानार्याणां शास्त्रेष्वपि मुख्योपास्यत्वेनाग्निरेव विहितः।

---

(a) आर्यमञ्जुश्रीमूलकल्प १३. (b) अमरकोष १-१-१-१० (c) हेमचन्द्र २ (१४९-१५१). (d) ऋग्वेदसंहिता १०-१५४-३. (e) ऋग्वेदसंहिता ३-१८-१. (f) ऋग्वेदसंहिता ४-४-४. (g) ऋग्वेदसंहिता ७-५-६. (h) ऋग्वेदसंहिता १०-८७-२२. (i) ऋग्वेदसंहिता १०-९९-३. (j) महाभारत शान्तिपर्व १५-४९. (k) गोपथब्राह्मण १-५-२५.

" एष वै प्रथमो यज्ञो यज्ञानां यदग्निष्टोमः " a " अयमग्निः श्रेष्ठतमः " b "अग्निरग्रे प्रथमो देवतानाम् " c इत्यादिः। अयमेव केवलघृतकलेवरोऽग्निर्ऋग्वेदीयः २६ तथा चात्र नम उक्तिविधाने ऋग्वेदीय एवाग्निरुपास्यत्वेनाभिमतः। एतदेवास्यां यजुर्वेदीयायामप्युपनिषदि ' अग्ने नय सुपथा ' इत्यृग्वे-

अतोपि यज्ञश्रेष्ठ इत्यवधार्यम्। यद्यपि वेदेषु वरुणेन्द्रादयो बहवो देवाः स्तुतास्तथापि सर्वत्रैवाग्निरेव मुख्यः,—देवतान्तरपूजनस्याग्निसापेक्षत्वाद्, अग्निपूजनस्य तन्निरपेक्षत्वात्, " अग्निर्वैसर्वा देवताः " d " अग्निरग्रे प्रथमो देवतानाम् " e इत्यादिश्रुतेश्च।

२६ ऋग्वेदीय इति। दह्यमानकाष्ठादौ घृताहुतोऽग्निर्यजुर्वेदीयो वर्त्तिकादियुक्तदीपादौ घृतप्रज्वालितोग्निस्तान्त्रिक इत्यनुमीयते; विजातीयगन्धशून्यत्वाद् अयमेव केवलघृतकलेवरोग्निः शुचितमः श्रेष्ठतमश्चेति मन्यते। तथाहि श्रूयते " शुचिप्रतीकम्……गृणे " f "घृतनिर्णिक् स्वाहुतः अग्निः " g " घृतप्रतीकं व ऋतस्य धूर्षदमग्निम् " h " घृतप्रतीक उर्विया व्यद्यौतदग्निः " i इत्यादि। एष एवाग्निर्घृतस्य धारया रक्षणीयः, तदर्थं च पात्रं त्रिकोणयोन्याकारं करणीयं तेनैवास्याऽनिर्वापरक्षणं सम्भवति। केवलघृतकलेवरस्यास्य ऋग्वेदीयस्यैवाग्नेः कृते योनिविधानं वोद्धव्यम्, यजुर्वेदीयस्याग्नेर्नैतादृशो नियमः ( इहान्यदप्यनुसन्धेयम् )।

( a ) श्रुतिरिति रामतीर्थमुनिवराः, मैत्रायणीयोपनिषट्टीकायां ६–३६. ( Cowell's Edition. ) ( b ) कृष्णयजुर्वेदसंहिता १–५–१०–२,, कठसंहिता चरकशाखा ७–१४,, सामविधानब्राह्मण ३–४–४,, आर्षेयब्राह्मण. ( c ) तैत्तिरीयब्राह्मण २–४–३–३. ( d ) ऐतरेयब्राह्मण १–१–१–४. ( e ) तैत्तिरीयब्राह्मण २–४–३–३. ( f ) ऋग्वेदसंहिता १–१४३–६. ( g ) ऋग्वेदसंहिता, ३–२७–५. ( h ) ऋग्वेदसंहिता १–१४३–७. ( i ) ऋग्वेदसंहिता ३–१–१८.

दीयस्य मन्त्रस्यो २७ द्धरणतात्पर्य्यम् । अस्यैव सनातन-धर्म्ममूलभूतस्याग्नेः २८ प्रचारेण संवर्द्धनं गृहे गृहे प्रति-

२७ ऋग्वेदीयस्य मन्त्रस्येति । क्रतो स्मरेत्यादौ द्विरुक्तिर्दधीचिदृष्टोपनिषदः समाप्तिं गमयति । अत्रान्ते अग्ने नयेत्यस्य ऋग्वेदोद्धृतमन्त्रस्य ऋषिरगस्त्यः, न दधीचिः । स तु मन्त्रदर्शनसमर्थोपि मन्त्रमिममुद्धरन् ऋग्वेदस्य तद्विहिताग्न्युपासनस्य च श्रेष्ठतमत्वं स्वीकृतवान् । स्यादेतत्, ज्ञानस्योपायत्वेन ज्ञानात्पूर्वं वाच्याया उपासनायास्तत्पश्चात् कथनं किंतात्पर्य्यकमिति चेदुच्यते-स्वार्थसिद्धिपरोपकारयोर्युगपदविरोधेन साधनाय, वेदमार्गरूपसनातनधर्म्मस्य परिरक्षणाय च, ज्ञानवतां ज्ञानोदयोत्तरमपि ज्ञानसहचरिताग्निहोत्रोपासनाकर्म्माणि कर्त्तव्यानि-इति । एतच्च पूर्वमेव प्रतिपादितम् "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयँ सह" a इत्यत्र ।

२८ सनातनधर्म्मेत्यादि । यत इह लोके सुखं परलोके च मोक्षः सिध्यतः स धर्म इत्युच्यते । तदुक्तं कणादमुनिना "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः" b इति । श्रुतिस्मृतितन्त्रमिति त्रयमेव सनातनधर्मः । मुक्तिलाभ एव प्रधानकर्तव्यं तथापि श्रेष्ठवर्गाः सदैव मान्या इति सनातनधर्मस्याभिप्रायः । तत्र श्रुतितन्त्रे देवताविषयके, स्मृतिस्तु मनुष्यविषया । मनुष्येभ्यो देवानां श्रेष्ठत्वात् तन्त्रमपि वेदवत् स्मृतेः श्रेष्ठम् । ऋग्वेदस्य चतुर्थमण्डले ऋषिर्वामदेवः स्वकीयं दारिद्र्यं सूचयन् c धनिनां कृते घृताहुतिं पश्यति, स्वयन्तु स्तुतिमार्गमामनति—तत्रेदं सूक्तं भवति " वामं वामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूलती ॥ " d इति । एवं दरिद्राणां कृते वामदेवदृष्टवेदमार्ग एव वामकेश्वरागमो वाममार्गो वेत्युच्यते । स हि सविस्तरं तन्यमानः सन् तन्त्रमिति चोच्यते । न कदाचिद् दीपदानघृतहवनादिकं

(a) ईशावास्योपनिषद् ११. (b) वैशषिकदर्शन १-१-२. (c) ऋग्वेद संहिता ४-१८-१३. (d) ऋग्वेदसंहिता ४-३०-२४.

विना तन्त्रानुष्ठानं सिध्यति । कालक्रमेण तत्रानेकम्लेच्छाचारस्य प्रक्षेपे सत्यपि अग्निस्वीकरणात् सोपि सनातनधर्मान्तर्भूत एव भवितुमर्हति । तदुक्तम् " तन्त्रोक्तेन प्रकारेण देवता या प्रतिष्ठिता । सापि वन्द्या सुसेव्या च पूजनीया च वैदिकैः ॥" a इति, " बुद्धार्हतादिमार्गस्थे देवताप्रतिमासु च । देवताबुद्धिमात्रं यत् सोपि यज्ञः प्रकीर्तितः॥" b इति च । तथा च दक्षिणामूर्तिप्रवर्त्तितमार्गस्तु दक्षिणमार्गो दक्षिणेश्वरतन्त्रं वेत्युच्यते । बुद्धागमस्य तन्त्रप्रधानत्वम्, अग्न्याहुतिस्वीकरणम् c गोरक्षणम्, केशशिखाधारणञ्च बुद्धदेवस्यापि सनातनधर्मित्वं सूचयति । तथा च तस्य सनातनधर्म्मित्वे प्रमाणान्तराणि सन्ति-वर्णाश्रममाहात्म्यस्वीकरणम् d परलोके कर्म्मफलप्राप्तिस्वीकरणम् योगेन बहुजातिस्मरणम् e देवतादर्शनकथनम् f आर्य्यप्रज्ञापारमिताख्यस्य वेदोक्तानन्तज्ञानरूपस्य ब्रह्मणः प्रतिपादनम् g सृष्टेरात्मसम्भूतत्वदर्शनम्, तद्दर्शनेन विदेहमुक्तिनिर्द्धारणम् h वासनाया बन्धमयत्वम् ( तृष्णावादः ), जीवस्य दुःखमयत्वम्, संसारस्य मायिकत्वम् ( शून्यवादः ) इत्याद्युपनिषत्प्रतिपादितविषयस्य स्वीकरणम् i—इत्यादीनि । बुद्धदेवस्तु यज्ञे पशुवधमात्रं निन्दितवान्, न तु वेदसमूहम् । स्मृतिरपि सनातनधर्माभिर्बुद्धस्य समाराध्यत्वमनुमोदितवती । उक्तञ्च " वक्ष्ये बुद्धावतारञ्च पठतः शृण्वतोऽर्थदम् " j " बुद्धः.........सम्पूज्यश्च व्रतादिना " k " बुद्धदेवस्य प्रतिमां स्थापयित्वाऽर्चयित्वा च ब्राह्मणाय दद्यात् " l " बुद्धस्तु द्विभुजः कार्यः " m " पौषशुक्लसप्तम्यां कुर्य्याद् बुद्धस्य

( a ) सूतसंहिता ( सूतगीता ८-४५ ). ( b ) सूतसंहिता ४-३-२१. (c) आर्य्यमञ्जुश्रीमूलकल्प १३. ( d ) ललितविस्तर ३; प्रज्ञापारमिता शतसाहस्रिका १०, ( e ) जातकमाला । ( f ) महापरिनिर्वाणसूत्रान्ते हिरण्यवतीयखण्डे । ( g ) अभिधर्म्मपिटके अष्टसाहस्रिकायाम् । ( h ) धर्म्मपद ( धम्मपद ) ११ ९ ( i ) सूत्रपिटके धर्मचक्रप्रवर्त्तनसूत्रादौ; विनयापिटके; अभिधर्मपिटके च । ( j ) अग्निपुराण १६-१. ( k ) गरुडपुराण १-२-३२. ( l ) भविष्यपुराण २-७३; हेमाद्रि, व्रतखण्ड १५. ( m ) हेमाद्रि चतुर्वर्गचिन्तामणि व्रतखण्ड १५.

ष्ठापन २९ श्च सर्व्ववेदसम्मतम्। तथाहि श्रुतिः "अग्निः पूर्व्वेभिर्ऋषिभिरीड्यो नूतनैरुत" a "अग्निं वर्द्धन्तु नो गिरः" b "अग्निं नरो वि भरन्ते गृहे गृहे" c इत्यादिः । स्मृतिरपि

---

पूजनम्" d "गायत्रीं कृत्वा पूजयेत्" e "एवं बुद्धं समाराध्य भुक्तिं मुक्तिं प्रयान्ति" f "नमो बुद्धाय" g "वर्णलक्षं जपेन्मन्त्रं होमयेच्च घृतौदनम्" h "बुद्धागमे मुनिवराः......... संस्कृताः" i इत्यादि। एवं बहुप्रमाणबलाद् बौद्धा राजनैतिककारणवशाद् वहिष्कृताः सन्तोपि सनातनधर्मिष्वेव धर्त्तुं न्याय्याः।

२९ गृहे गृहे प्रतिष्ठापनमिति। अग्न्युपासनं वित्तव्ययसाध्यम्। तथाहि श्रूयते "येषामिडा घृतहस्ता दुरोणे" j इति । अतो ये प्रभूतधनव्यये समर्थास्तेषां गृहे घृतप्रज्वालिताग्निर्निरन्तरं घृतप्रदानेनानिर्वापं यथा भवेत् तथा रक्षणीयः। एतदर्थेऽग्न्याहितघृताऽऽधारस्त्रिकोणयोन्याकृतिर्विधेयः । अन्येषान्तु प्रतिदिवसं प्रातर्मध्याह्नसायन्तनेषु सवनेषु त्रिवारमेवाऽऽयजनीयः । श्रूयते च "यं देवासस्त्रिरहन्नायजन्ते दिवे दिवे" k इति । यस्य गृहेऽग्निप्रतिष्ठा भवेत् स गृहपतिरेव स्वयं पुरोहितः सन्नग्निं विधिपूर्वकं प्रज्वालयेत् तस्य पत्नी तं गार्हपत्याग्निं घृतप्रदानेन रक्षेत्। अतो हि तामाहुः पत्नीति। तथा च पाणिनिसूत्रम् "पत्युर्नो यज्ञसंयोगे" l इति। अस्य गार्हपत्याग्नेः केनचित् कारणेन निर्वाणे सति न प्रायश्चित्तं विधी-

---

(a) ऋग्वेदसंहिता १-१-२. (b) ऋग्वेदसंहिता ३-१०-६. (c) ऋग्वेद संहिता ५-११-४. (d) निर्णयसिन्धु २. (e) लिङ्गपुराण २-४८-२८ ff. (f) मेरुतन्त्र अवतारप्रकरण ३६. (g) भागवतपुराण १०-४०-२२,. कूर्मपुराण ६-१५,. वायुपुराण ३०-२२५,. पद्मपुराण क्रियाखण्ड ११-९४,. गर्गसंहिता विश्वजित्खण्ड १३-४९, ५० (h) मेरुतन्त्र ३६. (i) सूतसंहितायां सूतगीता ८-३४. (j) ऋग्वेदसंहिता ७-१६-८. (k) ऋग्वेदसंहिता ३-४-२. (l) अष्टाध्यायी ४-१-३३

श्रुतिमनुगच्छति "वेदो विस्तार्य्यताम्",. ......"श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः। वेदस्याध्ययनं हीदं तच्च कार्य्यं महत् स्मृतम्॥" इति, "अग्निहोत्रफला वेदाः" इति च a। स्वर्गापवर्गयोः कुञ्जिकास्वरूपो ३०ऽयमग्निर्यथोक्तविधिनोपासितः स्वप्रभावं स्वत एव प्रकटयति "अग्नेरेव सायुज्यं सरूपतां

---

यते, किन्तु विधिपूर्वकं पुनः प्रज्वालनम् b। पुरा तु सर्वसाधारणस्य कृते यत्र तत्राग्निमन्दिराणि समभवन्। तत्र ऋत्विगादिद्वारा सर्वोऽपि जनोऽग्नौ घृतादिकं जुहोति स्म; तमेवाग्निमृत्विग् योन्याकारकुण्डं विधाय तत्र निरन्तरमनिर्वापं ररक्ष। स च ऋत्विग् ब्रह्मनिष्ठो ब्राह्मण एवाभवत्; तञ्च जनाः पुरोहितत्वेन निर्वाचयामासुः। तथा च श्रूयते "एवंविदं सुब्रह्मण्यं कुर्वीत नानेवंविदम्" c "तस्मादेवंविदमेव ब्राह्मणं कुर्वीत नानेवंविदम्" d इत्यादि। क्षत्रियाश्च तदानीं तत् सर्वं क्षतात् त्रायमाणाः सन्तो गोब्राह्मणहिततत्परा बभूवुः। तथा च श्रूयते "धृतव्रताः क्षत्रिया यज्ञनिष्कृतो बृहद्दिवा अध्वराणामभिश्रियः" e "राष्ट्रं गुप्तं क्षत्रियस्य" f इत्यादि।

३० कुञ्जिकास्वरूप इति। देवानां शरीराणि तेजोमयानि। तदुक्तम् "अग्निशरीरा वा देवताः" g। श्रुतिरपि भवति "सूर्यादिलोके तैजसं शरीरम्" h "लोका यत्र ज्योतिष्मन्तः" i इत्यादिः। तस्मादग्नावेव तेषां स्थितिः। यज्ञाग्नौ संतृप्तास्ते यजमानाय स्वर्गद्वारमपावृण्वन्ति। श्रूयते च "अग्निर्द्वारा वृण्वति" j "अग्निना

---

(a) महाभारत शान्तिपर्व ३२७-४४, ४९,. सभापर्व ५-१२. (b) जैमिनीयपूर्वमीमांसाया वह्वाडम्बरत्वं यज्ञलोपस्य कारणानामेकम्। (c) षड्विंशब्राह्मण १-२. (d) छान्दोग्योपनिषद् ४-१७-१० (e) ऋग्वेदसंहिता १०-६६-८. (f) ऋग्वेदसंहिता १०-१०९-३. (g) शारीरकमीमांसाभाष्ये शङ्कराचार्याः १-२-२४. (h) सांख्यसूत्रानिरुद्धवृत्तौ श्रुतिरित्युक्तम् ५-११२. (i) ऋग्वेदसंहिता ९-११३-१०. (j) ऋग्वेदसंहिता १-१२८-६.

सलोकतामश्नुते" a इति श्रुतेः। मन्त्रोऽयमृग्वेदे b शुक्लयजुर्वेदे c कृष्णयजुर्वेदे d तथा बृहदारण्यके e पि पठितः।

---

वै देवाः स्वर्गं लोकमायन्" f "यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकामयन्" g "यज्ञो वै सुतर्म्मा नौः" h इत्यादि। विवाहादौ यदग्निसाक्षीकरणम्, तदुत्तरं गार्हपत्याग्निरक्षणम्, पतिपत्न्योरेकव्रतपालनश्चैतत्सर्वमग्निद्वारा स्वर्गप्राप्तिकारणम्। तदुक्तं गीतायाम् "अनेन (यज्ञेन) प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" i इति। इत्यग्नेः स्वर्गकुञ्जिकास्वरूपत्वम्। तथा "युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्॥" j "अग्नयो वै त्रयी विद्या" k "तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिधातव्यः" l इत्यादिश्रुतिप्रामाण्येन ज्ञायते पूर्वेषामृषीणामग्न्युपासनेनैव ज्ञानमुद्भूत् तेन च मोक्षः। इत्यपवर्गकुञ्जिकास्वरूपत्वमपीति भावः। कुञ्जिकेयं पूर्वर्षिभिरुपलब्धाऽतो नूतनैरपि सुरक्षणीया परम्परा प्रवर्त्तनीया चेति वेदस्यादेशः। तथा च श्रुतिः "अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत" m "इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः" n इत्यादिः।



---

(a) ऐतरेय ब्राह्मण २-३०-६ (b) ऋग्वेदसंहिता १-१८९-१. (c) शुक्लयजुर्वेदसंहिता ५-३६. (d) कृष्णयजुर्वेदसंहिता १-१-१४-३. (e) बृहदारण्यकोपीनषत् ५-१५-१. (f) कठसंहिता चरकशाखा २२-७. (g) ऐतरेयब्राह्मण २-१-१. (h) ऐतरेयब्राह्मण १-३-२, २९. (i) श्रीमद्भगवद्गीता ३-१०. (j) श्वेताश्वतरोपनिषद् २-१. (k) महानारायणोपनिषत् ७९. (l) मैत्रायणीयोपनिषत् ६-३४. (m) ऋग्वेदसंहिता १-१-२. (n) ऋग्वेदसंहिता १०-१४-१५; अथर्ववेदसंहिता १८-२-२; तैत्तिरीयारण्यक ६-५-१.

# अथ ग्रन्थोपसंहारः ।

अत्र विद्याञ्चाविद्याञ्चेत्यादिना ज्ञानकर्म्मणोः समुच्चयवादो न सूचितः, ज्ञानस्य मुख्यत्वात् कर्म्मणो गौणत्वात् । तच्च-( गौण-मुख्यत्वञ्च ) अग्निहोत्रादिकर्म्मद्वारैव मर्त्त्यो मृत्युं तरति ज्ञान-द्वारा पुनरमृते लोके तिष्ठति; ज्ञानं विना केवलेन कर्म्मणा मृत्युं तीर्त्त्वापि पुनः पतति–इति पर्य्यवसेयम् । कर्म्मपदेनाऽग्निहोत्र-मेव बोद्धव्यम् । अग्निहोत्रस्य नाग्न्युपासने पर्य्यवसानं किन्तु अग्निद्वारा देवतादर्शने, ततस्तल्लोकगमने च । देवानामाग्निमयानि शरीराणि, ततस्तेषामग्नावेवाऽऽवाहनं प्रत्यक्षीभवनञ्च । मर्त्त्य-लोकेऽग्निरेक एव तद्वस्तु यदमृतलोकेनापि सम्बद्धम् । तथा हि श्रुतिः “ दूतो देवानामासि मर्त्त्यानामन्तर्महाँश्चारासि रोचनेन ” a इत्यादिः । पुनश्चाग्निषु योऽग्निर्गव्यघृतप्रज्वालितः स एव देवशरीरोपादानभूतस्याग्नेस्तुल्यजातीयः । स चाग्निस्तुल्यजाती-यत्वाद् देवान् इहानयति, देवसाक्षात्कारान्मानवोपि देवलोकम-चिराद् गच्छति, तत्र गत्वा पुनर्मुक्तिमार्गेऽग्रसरो भवति; देव-लोकमगत्वा न कदाचिन्मानवो मोक्तुमर्हति । श्रुतिरपि भवति “ प्रति त्यं चारुमध्वरं गोपीथाय* प्रहूयसे । मरुद्भिरग्न आगहि ” b “ तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ” c इत्यादिः । अतो मुख्यत्वेन घृताहुताग्नेरेव

( a ) ऋग्वेदसंहिता १०–४–२. ( b ) ऋग्वेदसंहिता १–१९–१. ( c ) बृहदारण्यकोपनिषत् ४–४–८. * ९० पृष्ठस्थं टीप्पणमवलोक्यम् ।

ग्रहणमग्निहोत्रादिदेवकर्मसु, ततश्च गोजातेरवध्यत्वम्। तथाच श्रूयते "मा गाम् अनागाम् अदितिं वधिष्ट" a इत्यादि। गोवधश्रुतयोऽपि सन्ति; तत्र विधिप्रत्ययाऽप्रयोगान्न ताः पुनर्विधिवाक्यानि, किन्तु इतिहासवार्ताः। केचन गोवधं कुर्वन्ति स्म तेषां तन्न वेदविधिरित्यर्थवादः। अत्रेदं द्रष्टव्यम्—न केवलं बहूपकारित्वाद् गोजातिरवध्या, किन्तु स्वर्गारोहणसाधनभूतत्वादपि। एतेन ये केचन गोपूजकान् 'पशुपूजकाः' इति मन्यन्ते ते भ्रान्ता इत्यत्र नैवास्ति संशयः; वस्तुतस्तु गोपूजकाः स्वर्गारोहणकामिन एव। ये देवलोके विश्वासं न कुर्वन्ति ये च देवान् न बहु मन्यन्ते, येऽपि देवलोकमप्राप्यैव मुक्तिं निरूपयन्ति न तेषां गोवधे तादृशो विरोधोऽस्ति—इति। अथ गोवधे किमनिष्टमिति चेत् फलेनैतत् परिचेयम्। अत्र गोवधेन यत्पापं तन्न पशुहिंसामात्रजन्यम्, किन्तु स्वर्गसोपानलोपजन्यमपि। तथाच स्मृतिरप्याहुर्गोवधप्रसंगे "ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके। विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो॥" b इति। अतः शुभमिच्छद्भिर्गोरक्षणं तेन चाग्निहोत्रादिदेवयजनं यत्नतः कार्यम्। अत एव "कुर्व्वन्नेवेह कर्म्माणि जिजीविषेत्......................न कर्म लिप्यते नरे" c इति यदुक्तं तदग्निहोत्रमेवाभिलक्ष्यीकृत्येति बोद्धव्यम्। यद्यपि प्राचीनकर्मदोषाद् यज्ञस्य फलं कदाचित् स्वाभीष्टं न

(a) ऋग्वेदसंहिता ८-१०१-१५. (b) महाभारत अनुशासनपर्व ७४-५. (c) ईशावास्योपनिषद् २.

स्यात् तथापि यज्ञः सर्वदा कर्त्तव्य एवेति निष्कामकर्मोपदेशस्य तात्पर्य्यम्—तदुक्तम् ' यष्टव्यः ' इति संज्ञया । तथाच यज्ञादिकं फलकामनात्यागपूर्वकमनुष्ठेयामिति गीताशासनमप्यस्ति—

" यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ " a
" कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ " b

इति। गीतायाम् "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" c इत्यादिना वेदवादरतानां या निन्दा प्रस्तुता सा तु सकामानुदिश्य, अन्यथा निष्कामभावेन यज्ञकरणं यज्ञशिष्टान्नभोजनञ्च यत् स्पष्टमेवानुमोदितं तदसंगतं स्यात् । उक्तं हि " देवान् भावयतानेन " d " यज्ञशिष्टाशिनः सन्तो मुच्यन्ते " e " यज्ञशिष्टामृतभुजो यान्ति ब्रह्म " f इत्यादि । तथा हि सर्वथा त्यागीनां ब्रह्मनिष्ठांनामपि कृते फलकामनात्यागपूर्वकमग्निमुखेनैव ब्रह्मकर्म विहितं तेनैव मोक्षपदञ्च निरूपितम् । स्मर्यते च—

" सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्तु कामधुक् ॥

(a) श्रीमद्भगवद्गीता १८-५,६. (b) श्रीमद्भगवद्गीता २-४७. (c) श्रीमद्भगवतद्गीता २-४५. (d) श्रीमद्भगवद्गीता ३-११. (e) श्रीमद्भगवद्गीता ३-१३. (f) श्रीमद्भगवद्गीता ४-३१.

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ " a
" कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥
एवं प्रवर्त्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥" b

" अनाश्रितः कर्मफलं कार्यं कर्म्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ " c
" कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥ " d
" गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्म समाधिना ॥ " e इत्यादि ।

श्रुतावपि आरण्यकप्रस्थाने ब्रह्मनिष्ठानामाचार्य्याणामग्निचर्य्याव्रतमवगम्यते " स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " f " ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः " g " समिधं सौम्याहर " h " तौ......ह

(a) श्रीमद्भगवद्गीता ३-१०, ११. (b) श्रीमद्भगवद्गीता ३-१५, १६. (c) श्रीमद्भगवद्गीता ६-१. (d) श्रीमद्भगवद्गीता १८-९. (e) श्रीमद्भगवद्गीता ४-२३, २४. (f) मुण्डकोपनिषत् १-२-१२. (g) प्रश्नोपनिषत् १-१. (h) छान्दोग्योपनिषत् ४-४-५.

समित्पाणी प्रजापतिसकाशमाजग्मतुः " a " तत उ बालाकिः समित्पाणिः प्रतिचक्रामोपयानीति " b इत्यादिश्रुतेः । अरणिरेव बोद्धव्यः समित्पदेन । अरणिप्रमथनेनाऽग्न्युत्पादनस्य प्रतिपादकत्वादाहुरारण्यकमिति । वेदानामारण्यकविभागोऽग्निविषयक एव नारण्यविषयक इति ध्येयम् ।

एतेन ग्रन्थसन्दर्भेण यावज्जीवमग्निहोत्रं सर्वैरवश्यमनुष्ठेयमिति निर्द्धारितम् । अनुष्ठातॄणाञ्च कायमनोवाक्शुद्धिः सिद्धेर्मूलम् अत एव सनातनधर्म्मं शौचसदाचारब्रह्मचर्यादिकं विवाहबन्धनञ्च सविशेषं नियमितम् ।

## यज्ञलोपस्य कारणम् ।

अथेयं शङ्का भवति—कथमेतादृशस्य सत्यसनातनधर्म्मस्य लोपः सम्भवेत् ? कथं वा म्लेच्छा गोवधं परित्यज्य सनातनधर्म्मं नाश्रयेयुः ?—इति । अत्रोच्यते—उपासकानां परस्परविद्वेषणमेव तत्र मुख्यं कारणमिति । इत्थम्—एको देव उपासकं रक्षति, अपरश्च (देवो) विद्वेष्टृप्रयुक्तः संस्तमेवोपासकं जिघांसति; एवं देवानां मध्येऽपि परस्परं विद्वेषः संक्रामति, तस्माच्च ते देवा मर्त्त्यलोकसम्बन्धं त्यजन्ति । तदुक्तम्—

" ॐ स ह नाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः " c

( a ) छान्दोग्योपनिषत् ८-७-२. ( b ) कौषीतकिब्राह्मणोपनिषत् ४-१८.
( c ) तैत्तिरीयशान्तिपाठः.

" सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।
अन्योऽन्यमभि हर्यत वत्सं जातमिवाघ्न्या।
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जायापत्ये मधुमतीं वाचं वदतु शन्तिवाम्।
मा भ्राता भ्रातरं द्विक्षत् मा स्वसारमुत स्वसा॥
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥
येन देवा न वियन्ति नो च विद्विषते मिथः।
तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः॥
सम्यञ्चोऽग्निं सपर्य्यत अरा नाभिमिवाभितः।
देवा इवामृतं रक्षमाणाः सायम्प्रातः सौमनसो वो अस्तु॥" a
" संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते॥ " b इत्यादि।



( a ) अथर्वेदसंहिता ३–३० संक्षिता. (b) ( ऋग्वेदसंहिता १०– १९१–२)

# अथ ग्रन्थसमाप्तौ शान्तिपाठः ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ।

इति वाजसनेयिश्रीशुक्लयजुर्वेदे संहितामन्त्रभागे काण्वशाखायाम् ईशावास्योपनिषत् ।

अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ।

इति श्रीशुक्लयजुर्वेदे संहितामन्त्रभागे १ ईशावास्योपनिषदि आग्नेयभाष्यम् ।

---

१ संहितामन्त्रभाग इति । तत्र चत्वारिंशत्तमोऽध्याय एवेयमुपनिषत् । तत्र च पूर्वपूर्वाध्यायेषु कर्म ज्ञानमुपासना चेति यत् त्रयं सविस्तरमुपदिष्टं तदेवात्राध्याये संक्षिप्योपसंहृतम् । इयमेकैव संहिताभागान्तर्गता मन्त्रोपनिषदिति च प्रसिद्धा; अतः प्रधानभूतत्वादुपनिषत्सु सर्वप्रथमं पठिता । अन्याः सर्वा ब्राह्मणभागे आरण्यकभागे वा दृष्टत्वाद् ब्राह्मणोपनिषदो वाऽऽरण्यकोपनिषदो वेति कथ्यन्ते ।

इतीशावास्योपनिषदाग्नेयभाष्यविवरणम् ।

शं नो अग्निः ।

इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ।

